## अथ तृतीयः खण्डः

प्रतिश्रुते जुहोति॥१॥ चतुरश्रं गोमयेन स्थण्डिलमुपलिप्य पूर्वयोर्विदिशयोः दक्षिणां प्राचीं पित्र्य[1] उत्तरां दैवे प्राचीमेवैक उदक्संस्थां[2] मध्ये रेखां लिखित्वा तस्या दक्षिणत उपरिष्टादूर्ध्वामेकां मध्य एकामुत्तरत एकां[3] तामभ्युक्ष्य

"अग्निं दधामि मनसा शिवेनायमस्तु सङ्गमनो वसूनाम् ।
मा नो हिंसीः स्थविरं मा कुमारं शं नो भव द्विपदे शं चतुष्पदे ॥"

यद्येवं हिरण्यनित्यत्वज्ञापनार्थं पूर्वं नोक्तम्, नित्यं हिरण्यं भार्यम् हिरण्यं च बिभृयादिति हि श्रुतिः । "तस्मात् सुवर्णं हिरण्यं भार्यम्" इति विज्ञायते । उक्तं पुरस्तात् नामकरणमन्त्राणां ज्ञापनम् । पूर्णपात्रीमभिमृश्य उत्थाय चाचार्यस्ताभिरद्भिः "आ नः प्रजाम्" इति कन्याया मूर्धनि निषिञ्चति तिष्ठन्नासीनायाः । "प्रजास्त्वयि दधामि । पशूंस्त्वयि दधामि । तेजो ब्रह्मवर्चसं [र्चस्यं] त्वयि दधामि ।" इति त्रिभिर्मन्त्रैः निषिञ्चति ॥ ३ ॥

## अथ तृतीयः खण्डः

प्रति......होति ॥ प्रतिश्रुते कर्मणि दुहितृमर्त्ता[4] गृह्यैः कन्यया[5] च प्रतिश्रुतं कर्मेति वरकैरुक्ते तच्छ्रुत्वा वरो जुहोति[6] ॥ १ ॥

चतु......मार्ष्टि ॥ व्यवधायकमिदं वाक्यं पूर्वयोर्विदिशयोरिति[7] । उदक्संस्थां दक्षिणां प्राचीमिति त्रीणि वाक्यानि । मध्ये अन्यवाक्यव्यवहितानि बहूनि वाक्यानि पुरस्तादुक्तानि । तच्च वाक्यलक्षणमिति चोक्तं पुरस्तात् । आह च—

"यस्य स्याद्येन सम्बन्धो दूरस्थमपि तस्य तत् ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥"

इति । लौकिकानि वाक्यानि तथाविधानि दृश्यन्ते "उदकं पुनन्तीं ब्रूमो बदराणि प्रणिधिनं[8] कतमेन तु तीर्थेन गावः शूर्पेण पाययेयम्" इति । चतुरश्रं गोमयेन स्थण्डिलमुपलिप्य पूर्वयोर्विदिशयोरित्येव वाक्यम् । नैतद्वाक्यम्, साकाङ्क्षत्वात्; न साकाङ्क्षं वाक्यं भवति । उक्तं तु वाक्यलक्षणम्—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे

१. T omits पित्र्ये
२. T. संस्था
३. T. उत्तर एकां
४. L. मातृ
५. A. कन्या या च
६. A. श्रुतावरोऽजुहोति
७. L. धूमयोजिग्निशयोः । उद
८. L. प्रवीणा कत

स्यात्" इति। अपि चोक्तम्—"साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण" इति। नैष दोषः। साकाङ्क्षमपि वाक्यं भवति। कर्मवाक्यलक्षणं हि यदेकं कर्मसाधनमभिधत्ते शब्दरूपं तदेकं वाक्यमित्युच्यते। यथाहरपात्रमिति प्रतिश्रुते जुहोतीति। तत्र "समानकर्तृकयोः पूर्वकाले" इति ल्यप्प्रत्ययो विहितः। स द्वयोरेकं कर्तारं निदर्शयति। तस्मादुत्तरेण कर्मणा समानकर्तृकमेतदप्यन्यत् कर्म चेद्वाक्यं तदभिधायकं शब्दरूपं भवितुमर्हति[1]। क्रिया ह्युपलभ्यते। यत्र तूत्तरं कर्म नास्ति तत्राध्याहारः कर्तव्यः स्यात्, यथा—"उपहूयैष दक्षिणाकालः" इति। इदमुपहूयान्यत्कर्म करोतीति तत्र भवति। [2]तथा हि तत्र केषाञ्चिद्व्याख्या। [3]तस्मात् प्रत्ययान्तमपि वाक्यं भवति। कचित् प्रतिश्रुते जुहोतीति शब्द[4]चोदितस्य कर्मण इतिकर्तव्यता विधीयते। वास्तोः पूर्वयोः स्थण्डिलं गोमयेन चतुरश्रमुपलिप्य तयोर्विदिशयोर्नियमः क्रियते। दक्षिणां प्राचीं पित्र्ये कर्मणि प्रतीयात्। उत्तरां दैवे। उत्तरां प्राचीं दैवे कर्मणि प्रतीयात्। प्राचीमेवैके। दैवे कर्मणि। प्राचीमेव दिशमेके आचार्या मन्यन्ते। प्राचीमेक इत्येतावता सिद्धे, एवशब्दोऽवधारणार्थः। अवधारणं चाभिमतपक्षप्रदर्शनार्थम्। "प्राङ्न्यायानि देवकर्माणि" इति हि परिभाषितस्य वाक्यखण्डस्य[5] शेषः "उपलिप्य तस्य मध्ये उदक्संस्थां लेखां लिखित्वा" इति। सर्वाश्चावृतो दक्षिणतः प्रवृत्तय उदक्संस्था भवन्तीत्येवोदक्संस्थता सिद्ध्येदिति चेत्, तन्न; दक्षिणत उत्तरतश्च कर्तव्ये दक्षिणत आरभ्य उदक्संस्थं कुर्यात्, न यथेष्टं इत्यारम्भसमाप्तिनियमः। अयं पुनः "प्राङ्न्यायानि देवकर्माणि" इत्यस्यापवादः। प्राक्संस्थ एव च वक्ष्यति। या लेखा परिभाषासामर्थ्यात् लेखाया उपरिष्टात् दक्षिणत ऊर्ध्वामेकां लेखां लिखित्वा तस्योपरिष्टादिति न बहिर्लिखेदित्येवमर्थम्। ऊर्ध्वामिति उद्धत्यैव[6] लिखेदित्येवमर्थम्। तथा मध्ये उत्तरतश्च लिखित्वा लेखा अभ्युक्ष्य अग्नि[7]रभ्युक्षणादि क्रियत इति पुरस्तादुक्तं सूत्रे—"अग्निं दधामि" इत्यनेन मन्त्रेण। तूष्णीमेव वा। अग्निं तत्र प्रणीय तस्याग्नेः समन्तात् प्रदक्षिणं पाणिना सोदकेन त्रिः परिमार्ष्टि। परितः। परीति[8] सर्वतोभावे। तथा पर्युक्षतीति। तस्मात् समन्तादिति न वक्तव्यम्। नैष दोषः। ऊनवाची कदाचित् परिशब्दो भवतीति मत्वा समन्ता-

१. L adds इति
२. T and L यथा हि
३. A. स्मोकत्वा प्रत्य
४. A. शब्दरूपचोदित
५. L. खण्डमितस्य
६. L omits लिखेदित्येवं
७. L. उक्ता अग्निं
८. L. परिः

**इत्यग्निं प्रणीय तूष्णीं वा प्रदक्षिणम्[1]। अग्नेः समन्तात् पाणिना सोदकेन त्रिः परिमार्ष्टि॥२॥ तत् समूहनमित्याचक्षते॥३॥ सकृदपसव्यं पित्र्ये॥४॥ अथ परिस्तरणम्॥५॥दक्षिणेन कुशानादाय सव्येनापनोति॥६॥दक्षिणं जान्वाच्य प्रागग्रैः**

दित्युक्तम्। यथा उदङ्पर्यावृत्य प्रतिपर्यावृत्य[3] परिदधातीति च। नैतदस्ति प्रयोजनम्, वचनात्तत्रोनवाची; उदङ्ङित्युक्त्वा तत्र न हि सर्वतो दिशमावृत्याथोदङ्मुखो भवति। प्रतिपर्यावृत्येत्यत्र प्रतिशब्दो यथापूर्ववाची प्रतिपर्यावृत्य दक्षिणामुख एवास्त इति। परिदधातीत्यत्र यथासम्भवं समन्ततः प्राप्तं पुनः पश्चाद्दक्षिणत उत्तरतश्चेति वचनाच्च भवति। तस्मात् परीति समन्ततो भावे वर्तत एव। अर्थात् वचनाद्वान्यथा स्यात्, यद्येवमिह समन्तत इति समीपवाचीति ब्रूमः। उक्तं पुरस्तात् दक्षिणपाणिकारित्वम्। वचनादर्थाद्वा सव्यपाणिकारित्वं स्यात्॥ २॥

तत् स......क्षते॥ तत् पाणिना सोदकेन[4] त्रिः परिमार्जनम्[5] समूहनमित्याचक्षते आचार्याः। इह सिद्धया संज्ञया पुरस्ताद् व्यवहारः कृतः—परिसमूहनम्, पर्युक्षणमित्येवमादिषु॥ ३॥

सकृ......पित्र्ये॥ एतदेवापसव्यं भवति पित्र्ये कर्मणि। ननु—अयं विधिः सर्वत्र पित्र्ये कुर्यादिति, आहोस्वित् संज्ञाविशेषनिर्देशः—इति। ब्रूमः। पित्र्ये चापि परिसमूह्येत्युक्तम्॥ ४॥

**अथ परिस्तरणम्**॥ समूहनं कृत्वा त्रिः[6] परिस्तरणं करोति। कथमिति चेत् इतीदमुक्तम्॥ ५॥

दक्षि......नोति॥ अपनोतीति धारयेदित्यर्थः। दक्षिणेन पाणिना कुशानादाय तान् पुनः सव्येन पाणिना गृह्णाति। इह दक्षिणेनेति सव्ये[7] विधिसंशयादुक्तम्, अनुच्यमाने हि सव्यहस्तादाने प्राक् संलक्ष्यते॥ ६॥

दक्षि......णाति॥ दक्षिणं जान्वाच्य तैः कुशैः प्रागग्रैः परिस्तृणाति॥ ७॥

१. T. Space is left out for writing तूष्णीं...णम

२. T. Space is left out for writing कुशान्...जान्वाच्य

३. L. omits प्रतिपर्यावृत्य

४. L. तन्मधादणिना सोद

५. A. नासमूहनं

६. A omits त्रिः

७. A. सव्य

कुशैः परिस्तृणाति ॥७॥ त्रिवृत् पञ्चवृद्वा ॥८॥ पुरस्तात् प्रथमम् ॥९॥ अथ

त्रिवृत् पञ्चवृद्वा ॥ त्रिवरणं त्रिवृत्; पञ्चकृत्वः आवर्तनं पञ्चवृत् ॥ ८ ॥

पुरस्तात् प्रथमम् ॥ स्तृणाति ॥ ९ ॥

अथ पश्चात्.........भवन्ति ॥ एवं पञ्चवृदपि प्रथमं स्तृतानां कुशानां मूलानि द्वितीयस्तरणकुशाग्रैः प्रच्छादयति । एवं तृतीयस्तरणकुशाग्रैः द्वितीयस्तरणकुशमूलानि । प्रागग्रैरिति न वक्तव्यम्, परिभाषासिद्धेः । इदमिह चोद्यम्—"अथ परिस्तरणम्" इत्येतत्तावन्न वक्तव्यम्, एवं परिस्तृणातीति विधानात् । यद्येवम्—अन्योऽयं विधिः "अथ परिस्तरणम्" इति । विधानादिदमपि कुशैरित्येव भवति। परीति सर्वतोभाववाचीत्युक्तम् । कुशैरग्निं सर्वतो दिशं स्तृणाति । तत्र पुरस्तात् पश्चाच्च कुशाः तिर्यञ्चो भवन्ति अर्थात् । न हि सर्वत्र प्रागग्रैरेव परिस्तरणं सर्वतः कर्तुं शक्यते । कर्माणीत्यत्र शक्यते, ऋते वक्ष्यमाणाविधानात् । अतः प्रागग्राणामपि कुशानामस्तित्वज्ञापनार्थमुत्तरत्र प्रागग्रैरपि विधानम् । एवं केषाञ्चित्कुशानां तिर्यक्त्वे सिद्धे तेषामुदगग्रत्वं परिभाषया साधितम् । "प्राङ्न्यायानि देवकर्माणि" इत्यत्र उदङ्न्यायान्यपि कानिचिद्भवन्तीति । एवं दक्षिणत उत्तरतश्च प्रागग्रैः स्तृणाति पुरस्तात् पश्चाच्च उदगग्रैरिति । एवं परिस्तरणविधानमुक्तं शौनकेनापि—"पुरस्ताद्दक्षिणतः पश्चादुत्तरतश्च" इति । अत्र उदक्संस्थमिति । एवं दक्षिणत उत्तरतः प्रागग्रैस्तृणाति । अथोत्तरतः परिस्तरणविधिरभिमतः । आहत्य कृत्स्नविधानात् सर्वांश्चावृत इति आवृत्प्रयोगं परिस्तरणं प्रसज्य परिभाषा विधीयते । सर्वाश्च आवृतो दक्षिणतः प्रवृत्तय उदक्संस्था प्रवृत्तिरिति प्रारम्भं दक्षिणतः प्रारभ्योदगपवर्गाः प्रयोगाः कर्तव्याः । सर्वग्रहणं परिभाषानिराकरणार्थम्, इतरथा परिस्तरण एव हि स्यात् ॥ १० ॥

१. IO, A[1] and A[2] begin from here
२. L. पञ्चति व्यत् वर्तनं
३. L omits स्तृणाति
४. A. प्रथमः तृणानां
५. A. मूलामूलानि
६. A. छादयति
७. A. कुशमूलाग्रैः
८. L. यद्येवमन्यो विधिः
९. A. कुशात्
१०. L adds न
११. A omits परि
१२. A. उदग्रत्वं
१३. A. इत्येकं
१४. A. ससर्वांश्च

विवाह प्रतिश्रुति होम:



पश्चान्मूलान्यग्रैः प्रच्छादयति सर्वांश्चावृतो दक्षिणतः प्रवृत्तय उदक्संस्था भवन्ति ॥१०॥ सकृदपसव्यं पित्र्ये ॥११॥ नाज्याहुतिषु नित्यं परिस्तरणम् ॥ १२॥ नित्याहुतिषु वा ॥१३॥

## अथ चतुर्थः खण्डः

दक्षिणतो ब्रह्माणं प्रतिष्ठाप्य उदपात्रं वा "भूर्भुवः सुवः" इत्युत्तरतः प्रणीताः कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रादेशेन प्रमाय कुशेन

सकृदपसव्यं पित्र्ये ॥ व्याख्यातम् ॥ ११ ॥

नाज्या......रणम् ॥ आज्याहुतिषु न नित्यं परिस्तरणं स्यात्; विकल्प इत्यर्थः। इह प्रधानाहुतिचोदनाभिव्यङ्ग्याहुतिष्वाज्यहविष्षु ॥ १२॥

नित्या......षु वा ॥ वाशब्दोऽधिकार्थः। नित्याहुतिषु च न नित्यः परिस्तरणम्। नित्याहुतय इति स्थालीपाकादीनि कर्माण्युच्यन्ते। तथा हि वक्ष्यामः। अथवान्यशास्त्रविहितानि कर्माणि यानि तेषामप्ययमेव होमविधिः। तत्राहरहःकर्तव्येषु सत्सु न नित्यं परिस्तरणमिति शास्त्रान्तरपरिग्रहः ॥ १३ ॥

## अथ चतुर्थः खण्डः

दक्षि......ति ॥ अग्नेर्दक्षिणतो ब्रह्माणं प्रतिष्ठाप्य निरसनोपवेशने कृत्वा उपविश्य जपित्वास्ते। दक्षिणत इति चोदपात्रार्थमुक्तम्। ब्रह्माणं हि विहितं पुरस्ताद्दक्षिणतो न्यायं ब्रह्मकर्मेति।

नन्विह "ब्रह्माणं प्रतिष्ठाप्य" इति स्थानं विधीयते, उपस्थानविधानवत्। नैष दोषः। प्रतिष्ठाप्येत्युदपात्रापेक्षमिति ब्रूमः। दक्षिणतो ब्रह्माणं ब्राह्मणं दक्षिणत इति। उदपात्रं वा दक्षिणतः प्रतिष्ठाप्य। "भूर्भुवस्सुवः" इत्युदपात्रस्यायं मन्त्रः, न ब्राह्मणस्य। अमन्त्रक एव हि विधेयो भवति। अथवा इह ब्रह्मणो निरसनोप-

१. T. Space is left out for writing श्चावृतो उदक्
२. T. वाज्याहुतिषु
३. T. Space is left out for writing उदपात्रं वा
४. T. अनन्तगर्भे
५. L adds विकल्प इत्यर्थः
६. L. च नु न
७. A. नित्या
८. L omits निरस...ब्राह्मणं दक्षिणत इति
९. L omits दक्षिणतः प्रतिष्ठाप्य
१०. L. इत्युत्तरतः

छिनत्ति "पवित्रे स्थः" इति॥१॥ द्वे त्रीणि वा भवन्ति॥२॥ "वैष्णव्यौ" इत्य-

वेशने। उपविश्य जपश्च न भवति केवलमेव ब्रह्मास्ते। अप्रधानवद्विधीयते। यदि ब्रह्मा प्रधानः स्यात् ब्रह्मास्त इत्यवक्ष्यत्। तथाल्पाक्षरं सूत्रं स्यात्। तथा ब्रह्माणमिति नान्यर्त्विङ्नामधेयम्। कं तर्हि? ब्रह्माणमित्यर्थः। सूर्यादयो[सूर्या]ब्रह्मा विद्यादिति हि लक्ष्यम्। तथा सति तृणनिरसनादीनामप्राप्तिरेव भवति। एतदेव च युक्तम्, न ह्यृत्विजां पाकयज्ञेषु। ननु—इहैक एव हि पाकयज्ञेषु कर्ता। पाकयज्ञश्चाल्पवाची। तथा ह्यल्पं कर्म भवति। आचार्यो द्वितीय इति चेन्न, कर्ताचार्यवत् द्रष्टा संशयच्छेत्ता। क्वचित्तु वचनादाचार्यः करोति, अग्नेरुत्तरतः प्रणीताः उपस्थापयति। प्रणीता इति हि संस्कृतानामपां संज्ञा। उत्तरत्र हि वक्ष्यति—प्रोक्षिता आपः प्रणीता इति। संस्कारादूर्ध्वं प्रतिष्ठापयति; इह प्रतिष्ठापनाधिकाराद्वाक्यमध्येऽभिहितः प्रयोगार्थम्। कुशतरुणे अविषमेऽविच्छिन्नाग्रेऽनन्तर्गर्भे आदाय प्रादेशेन प्रमाय प्रादेशमात्रे कृत्वा अन्येन कुशेन "पवित्रे स्थः" इत्यनेन मन्त्रेण छिनत्ति॥ १॥

द्वे...इति च [भवन्ति]॥ कुशतरुणे इति द्विवचननिर्देशादेव द्वित्वे सिद्धे पुनर्वचनं त्रित्वपक्षेऽपि यथार्थमयं मन्त्रो वक्तव्य इति ज्ञापनार्थम्। देवं[?]मन्त्रो भवति। त्रीणि चेत् "पवित्राणि स्थ" इति भवति। न हि यस्माद्दते समानविधानामूहोऽस्त्वमन्त्रमेवान्यथा स्यात्। प्रकृतिष्वतिदिष्टानामृचां मन्त्राणां वा विकृतौ यथार्थमूहो इत्युक्तम्। त्रीणि कुशतरुणान्येवंविधानि प्रादेशमात्राणि भवन्ति वा ते कुशतरुणे॥२॥

वैष्णव्यौ......ग्रन्थिम्॥ करोति। वैष्णव्यौ इत्यत्र पाठः संशयितः, पुँल्लिङ्गत्वात् स्त्रीलिङ्गत्वाद्वा। मन्त्रस्याभिधेयार्थस्य नपुंसकवाचित्वं च तत्र परिक्षिप्य

१. IO omits स्थ
२. L. सूर्यर्यो
३. L. सती
४. L. दीनां प्रा
५. L. आचार्य उपद्रष्टा
६. L. हितं न प्रणीताप्रयो
७. L. अन्तर्गर्भे
८. L omits आदाय
९. L omits प्रादे...न्येन
१०. L reads this mantra after छिनत्ति
११. L omits इत्यनेन मन्त्रेण
१२. L. वेवेदेवं
१३. A omits भवति
१४. L. विधानामूहो
१५. L omits मन्त्र
१६. A. ऊह्यः
१७. A. कुशानि
१८. L adds न त्रीणि

भ्युक्ष्य "त्वं चिदश्वम्" इति प्रदक्षिणग्रन्थिम्॥३॥ प्रागग्रे धारयन् आज्यस्थाल्या उपरि "महीनां पयोऽसि" इत्याज्यं निर्वपति॥४॥ उदीचोऽङ्गारान्निरूह्य "इषे त्वा" इत्यधिश्रित्य त्रिरवद्योत्य कुशतरुणे प्रत्यस्य "ऊर्जे त्वा" इति त्रिरुद-

प्रयोगः कार्यः। त्रित्वपक्षेऽप्यूहः कार्यः। उक्तेनैव च दर्शनेन इतरथार्थवशे सति न्यायो हि स्यात्॥ ३॥

प्राग......परि[र्वपति]॥ ते कुशतरुणे आज्यस्थाल्या उपरि प्रागग्रे धारयेत्। तेंतिरस्कृत्य तस्यामाज्यस्थाल्यां निर्वपति गृह्णातीत्यर्थः। "महीनां पयोऽसि" इत्यनेन मन्त्रेण॥ ४॥

उदी......रिति॥ उँदीचोऽङ्गारान्निरूह्य तेषु तदाज्यम् "इषे त्वा" इत्यनेन मन्त्रेण अधिश्रित्यादिष्टेन कुशेनान्येन वा त्रिरवद्योत्य तस्मिन्नाज्ये पूर्वे ते कुशतरुणे प्रत्यस्य "ऊर्जे त्वा" इत्यनेन मन्त्रेण तदाज्यं त्रिरुदगुद्वास्य। इह सकृदेव मन्त्र उच्यते इत्युक्तं पुरस्तात्, मन्त्रपृथक्त्वात् कर्मपृथक्त्वमिति मन्त्रैकत्वात् कर्मैकत्वम्। तस्मात् त्रिरुदग्वचनमेककर्म। एकस्मिंश्च कर्मण्येको मन्त्रः; तस्मादभ्यसेत। अयं तु विशेषः। सर्वत्र करणेषु मन्त्रान्ते पुनः कर्मादीनि सम्पातयति। तदुक्तम्— "पुरस्तान्मन्त्रान्तेन करणेषु कर्मणः सन्निपातनम्" इति। तानङ्गारान् प्रत्यूह्याग्नावेव ये कुशतरुणे त आदायास्याङ्गुष्ठोपकनिष्ठिकाभ्यां मूले दक्षिणेन पाणिना सङ्गृह्य तथैवाग्रे सव्येन ऊर्ध्वाग्रे प्रह्वे कृत्वा पुनरप्याज्ये प्रत्यस्यति। इह प्रत्यस्येति पाठं मन्यामहे। तथाह्युपपन्नतरं वाक्यं भवति। प्रत्यस्य ताभ्यामाज्यं त्रिरुत्पुनाति "सवितुष्ट्वा" इत्यनेन मन्त्रेण। इह केचित् "अवद्योत्यान्ये अप्रकृते असंस्कृते कुशतरुणे आज्ये प्रत्यस्यति"। तथा सति प्रकृतहानाप्रकृतप्रक्रिये स्यातामिति। अथापीहाज्ये प्रत्यस्ते

१. A omits कार्यः
२. L. वर्गे
३. L omits ते तिरस्कृत्य
४. L omits उदीचो...द्वास्य
५. L. तदादिष्टेन
६. L omits उच्यते...अयं तु वि
७. A adds कर्मान्ते पुनः
८. L. करणेन
९. A omits अग्नौ.. आदायास्या
१०. L omits मूले...सव्येन
११. A. पाठ तथा
१२. L reads the full mantra.
१३. L adds हि

गुद्वास्याङ्गरान् प्रत्यूह्य अङ्गुष्ठोपकनिष्ठिकाभ्यामूर्ध्वाग्रे प्रह्वीकृत्य आज्ये प्रत्यस्य त्रिरुत्पुनाति "सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः" इति॥५॥ आज्यसंस्कारः सर्वत्र॥६॥ नासंस्कृतेन जुहुयात्॥७॥ स्रुवे

कुशतरुणे ते एवाङ्गुष्ठोपकनिष्ठिकाभ्यामित्यत्रोत्पवनार्थे भवतः। न हि तत्रान्ये कुशतरुणे पश्यामः। अथ मतम्—अग्निहोत्रहोमे आज्ये संस्कृते कुशतरुणे दृष्टे इति। न हि तत्र संस्कृते कुशतरुणे प्रकृते स्तः। न च तद्विकृतिरयं ख्यातो हविःसंस्कारः। अन्यदिह सादृश्यं स्यादिति चेत्, न चेदमग्निहोत्रसदृशम्, येन ह्यस्य किञ्चित्सादृश्यम्। न चेष्टयामाज्ये प्रकृतकुशतरुणप्रत्यसनं विद्येते। पवित्रे एव तस्माद् भवतः। अथ शास्त्रान्तरविहितमिति चेत्, उक्तः परिहारः। अथ कस्मादुभाभ्यां पाणिभ्यामुत्पवनं क्रियते? तद्दक्षिणेनैव कर्तुं शक्यम्। तस्य ज्ञापकमुक्तं पुरस्तात् "उपकनिष्ठिकयाङ्गुष्ठेन च" इति ब्रूमत्वे उक्तमेकवचनेन। इह त्वङ्गुष्ठोपकनिष्ठिकाभ्यामिति द्विवचनेन उक्तम्। विकृतिनिर्देशस्येदं प्रयोजनम्। द्विवचनेन लिङ्गेनोभाभ्यां पाणिभ्यामुत्पवनमिति। ये चाप्यकौषीतकिनोऽनेन शास्त्रेण स्मार्तानि कुर्वन्ति, तेषामसंमोहार्थं सिद्धस्यार्थस्य पुनः प्रपञ्चः॥ ५॥

आज्य......र्वत्र॥ अयमाज्ये संस्कारः सर्वत्र भवति अप्रकृते च। प्रकृते कर्मणि नित्यम्॥ ६॥

ना......हुयात्॥ अन्येनाप्यसंस्कृतेन न जुहुयात्। अनाज्ञातः संस्कारो मन्त्रतः प्रोक्षणादिर्भवति। लौकिके चापि केवलाग्निसमिन्धने इन्धनसंस्कार आपस्तम्बेनोक्तम्—"नाप्रोक्षितमिन्धनमग्नावादध्यात्" इति; किं पुनर्होमे॥ ७॥

स्रुवे......इति॥ स्रुवे चाप एताभ्यां कुशतरुणाभ्यामुत्पुनाति। तत्र "सवितुर्वः प्रसव उत्पुनामि" इति मन्त्रो भवति। यावदुक्तस्तूत्पवनाभिधानसमर्थो

१. T. कृत्वा
२. L adds अमतं तथा
३. A omits प्रकृते
४. A. उक्ते
५. L omits परिहारः
६. A. प्रज्ञापकं
७. A. ब्रूमत्वे
८. A. पत्रम्
९. A adds चापि
१०. L. प्यस्य सं
११. L. अप्रेक्षितं
१२. A. एवाभ्यां

**चापः "सवितुर्वः" इति ॥८॥ ताः प्रोक्षणीः स्रुवं प्रतितप्य कुशैः संमृज्य पुनः प्रतितप्य निधाय एवं स्रुचं च सस्थालीपाके प्रोक्षिता आपः प्रणीताः प्रोक्षणीश्च ॥९॥ स्रुचः पात्रमर्थलक्षणग्रहणम् ॥१०॥**

मन्त्रो भवति। तस्मात् कृत्स्नो मन्त्र इति मन्यामहे। प्रकृतावनूहप्राप्तेरुपहूताः प्रोक्षणीं याः स्रुवं संस्कृता आपः ताः प्रोक्षणीः कुर्युः। प्रोक्ष्येत आभिः प्रोक्षणार्था इति प्रोक्षण्यः। स्रुवसंस्काराद्ध्र्वमप्संस्कारः कर्तव्यः। इह विधानमधिकारार्थम्, न प्रयोगार्थम्; एवं सति पात्रसंस्कारः सर्वकर्मार्थः स्यात्। अपि चैवमुत्तरप्रयोगार्थान्यन्यत्राधिकारप्रसङ्गाद्विहितानि सन्ति उत्तरतः प्रणीता इत्येवमादीनि। स्रुवं प्रतितप्य कुशैः संमृज्य पुनः प्रतितप्य निधाय। एवमेव स्रुचमपि प्रतितप्य संमार्जनप्रतितपनादि करोति सस्थालीपाके कर्मणि ॥ ८ ॥

[ताः] प्रोक्षणीः......च ॥ प्रोक्षिता आप इति स्रुवसंस्काराद्ध्र्वमप्संस्कारं दर्शयति; इतरथा प्रोक्षणीरित्येवावक्ष्यत्। याः स्रुवे संस्कृता आपः तासामपां असामर्थ्यं इदमुच्यते। ताभिरन्या आपः प्रोक्ष्य ताः प्रोक्षिता आपः प्रणीताश्च प्रोक्षणीश्च कुर्यात्। पर्युक्षणादिषु ता एव कुर्यात् ॥ ९ ॥

स्रुचः......हणम् ॥ स्रुच आकृतिलक्षणं प्रमाणलक्षणं च शास्त्रान्तरविहितम्। प्रसिद्धत्वाच्च शब्दानां तथाप्राप्तत्वमन्यथाविधानत्वमुच्यते। अर्थ इति धार्यप्रमाणमभिप्रेतम्। निर्धारणलक्षणमिति शास्त्रतोऽर्थलक्षणग्रहणम्। अर्थग्रहणं लक्षणग्रहणमिति भवति। स्रुचः पात्रं धार्यधारणलक्षणम्, यावता पात्रेण धार्यं हविर्धार्यते तत् स्रुचो लक्षणम्। यद्येवं स्रुचो धार्यस्य प्रमाणं वक्तव्यम्। असिद्धे हि धार्ये धारणस्याप्यसिद्धिः। आध्वर्यवे शास्त्रेऽवदानप्रमाणमुक्तम् — "अङ्गुष्ठपर्वमात्रम्"

१. T. चमसस्थालीपाके
IO omits च स
२. A adds न
३. L. उपहूतस्रुवे
४. L. अद्भिः
५. L. प्रतापसं-
६. A adds पाके स्रुवं
७. L. एवं स्रुचमपि सस्था-
८. A omits च
९. L. सिद्धत्वमप्रहत्वाच
१०. L omits लक्षण
११. L. अनय
१२. L adds हि

## अथ पञ्चमः खण्डः

दक्षिणेन कुशानादाय सव्येनापनोति ॥१॥ दक्षिणं जान्वाच्य परिधिभिस्त्रिभिरच्छिन्नाग्रैरग्निं परिदधाति ॥२॥ पश्चाद् दक्षिणत उत्तरतश्च ॥३॥ अलंकृत्य कुशतरुणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्षति "महान्तं कोशम्"

इति। इह च अवदानशब्दस्य स एव भवितुमर्हति। अथ वार्थ इति कार्यं जुहोत्यर्थः। अग्नौ प्रक्षेपणमासेचनम्। तदुक्तम् — "जुहोतिरासेचनाधिकः स्यात्" इति। अर्थो लक्ष्यः अनेन इत्यर्थलक्षणम्। हविर्ह्यर्थलक्षणमासेचनलक्षणं प्रक्षेपलक्षणं हविरिति। गृह्यतेऽनेनेति ग्रहणम्। यावता हविषोऽत्रासेचनप्रसिद्धिस्तावता पात्रेण तद्धविर्गृह्यते। आधार्यते तथा स्रुवः पात्रं कुर्यात्। प्रक्षेपमात्रस्य हविषो धारणमात्रं कुर्यादिति। एवं धार्यधारणयोः प्रमाणलक्षणमुक्तं भवति। अर्थलक्षणम्, ग्रहणमिति च पदानां यथाक्रममर्थक्लृप्तिः ॥ १० ॥

## अथ पञ्चमः खण्डः

दक्षि......नोति ॥ व्याख्यातम् ॥ १ ॥

दक्षि......दधाति ॥ परिधीयन्ते सर्वतो धीयन्त इति परिधयः। त्रिभिः परिधिभिरच्छिन्नाग्राभिरग्निं परिदधाति ॥ २ ॥

कथम् इति चेत्—

पश्चात्......तश्च ॥ यः पश्चादुदगग्रो भवति—तदुक्तम् "उदङ्न्यायानि वा" इति; होमवृक्षं उत्तरत्र वक्ष्यते—तस्यैव वृक्षस्य परिधयोऽपि भवन्तीति। अग्निमिति न वक्तव्यम्, प्रकृतत्वात्। किन्तु परिधिप्रमाणविवक्षयोक्तम्। कथम् इति चेत्, अन्योन्यप्रश्लेषणेन यथाग्निपरिधाने समर्थाः स्युः तथा परिधयः कार्याः, नोदपात्रादिपरिधान इति ॥ ३ ॥

अलं......मिति ॥ ततोऽग्निमलङ्कृत्य पुष्पादिभिर्यथोपपादमात्मानं च कुमारीं च प्रकृताभ्यां कुशतरुणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्षति "महान्तं कोशम्"

१. IO. अग्रेभिः
२. IO दक्षिणोत्तरतः
३. A adds अपि
४. L adds भवतीत्यर्थः
५. A. तेनेति
६. L omits लक्षणं
७. A omits च
८. L. वृक्षतः

इति ॥४॥ हुत्वा च ॥५॥ ते अनुप्रहरति ॥६॥ तूष्णीं सकृदपसव्यं पित्र्ये ॥ ७॥ अभिघारितमिध्ममग्नौ जुहोति "स्विध्मा यद्वनधितिः" इति ॥८॥

इत्यनयर्चा। इहाग्निग्रहणमात्मानमप्यलङ्करोति इत्यनग्न्यधिकारज्ञापनार्थम्। उक्त एव वा परिहारः—अग्निमेव पर्युक्षति, नोदपात्रादिना सहेति। इह केचित् संस्कृते कुशतरुणे अप्संस्कारानन्तरमग्नावनुप्रहृत्यान्याभ्यामसंस्कृताभ्यां पर्युक्षणं कुर्वन्ति। न वयं तेषामभिप्रायं जानीमः। दोषस्तु उक्तः—प्रकृतहानिरप्रकृतप्रक्रिया संस्कारहानिश्चेति। वयं तु—संस्कृतयोर्नाशे दोष उक्तलक्षणे कुशतरुणे आदायैव संस्कृत्य पर्युक्षणं कार्यमिति ब्रूमः ॥ ४ ॥

हुत्वा च ॥ हुत्वा च प्रकृताभ्यां कुशतरुणाभ्याम् "महान्तं कोशम्" इति त्रिः पर्युक्षति। ननु तत्रापि वक्ष्यति यथोक्तं पर्युक्षणमिति। इह विधानमनुप्रहरणविधानार्थं हुत्वा च ताभ्यां पर्युक्ष्य पुनः ॥ ५ ॥

ते अनुप्रहरति ॥ अत्र विधानकालसंज्ञानार्थं हुत्वा च ताभ्यां पर्युक्ष्य ततस्तेऽग्नौ अनुप्रहरति ॥ ६ ॥

तूष्णीं......पित्र्ये ॥ पित्र्ये कर्मणि तूष्णीं सकृदपसव्यं पर्युक्षति ॥ ७ ॥

अभि......रिति ॥ आज्येनाभिघार्याभिघारितमिध्ममग्नौ जुहोति—"स्विध्मा यद्वनधितिः" इत्यनयर्चा। अग्नाविति न वक्तव्यम् प्रकृतत्वादिन्धनार्थत्वादिध्मस्याग्निमात्रे जुहोतिचोदितत्वात् आहुत्यपेक्षणसामर्थ्यात् कृत्वेत्येवमर्थमग्नावित्युक्तम्। अथवा इन्धनार्थत्वादग्निमात्रे होतव्यम्। आहुतिक्षेपणार्थो ह्यग्निः। तस्मात् समिद्धेऽग्नौ जुहोति। इयमप्याहुतिर्होत्येवमर्थमग्नावित्युक्तम्। इह सप्तदशसमिध इध्मो भवति। कथमिति चेत् हविर्युक्तोऽल्पीभूतः पाकयज्ञः। पाकशब्दोऽल्पवाची। तथा हि वक्ष्यति—"त एते अप्रयाजाः" इति। तस्मात् "साप्तदश्यः सामिधेनीनाम्" इत्युत्सर्गेण विहितमिति इहापि सप्तदशसमिध उत्सर्गेणेध्मा भवन्तीति। अस्थालीपाके पञ्चदश। तथा हि सामिधेनीविधानं दर्शपूर्णमासयोरन्यत्रापि तथा विहिताः समिध इध्मो भवति ॥ ८ ॥

१. L. अग्निगंहण
२. A. उक्तः
३. A. प्रकृतात्
४. A. आहुत्या क्षयसाम-
५. A. त्यसं स्थाली-
६. A adds च

**"विष्णोर्हस्तोऽसि" इति दक्षिणेन मूले स्रुवम् ॥९॥ स्रुवेणाज्याहुतीर्जुहोति ॥१०॥ स्रुचा स्थालीपाकं द्विरवद्यति ॥११॥ त्रिर्जामदग्न्यानाम् ॥१२॥**

विष्णो......स्रुवम् ॥ स्रुवेणैवाभिघारणादीनि कर्तव्यानीति वक्ष्यामः । तस्मादिध्माभिघारणार्थं स्रुवादाने प्राप्ते मन्त्रो विधीयते "विष्णोर्हस्तोऽसि" इति । अनेन मन्त्रेण मूले स्रुवं गृह्णाति दक्षिणेन पाणिना । तथा गृहीत्वा[1] तेनेध्ममभिघारयति । इह दक्षिणेनेति किमर्थमुक्तम्? उभाभ्यां पाणिभ्यां[2] यत् क्रियते, तत्र यत् प्रधानवद्योदितं दक्षिणेन कर्तव्यमित्युक्तं पुरस्तादेव वेदास्तरणादिषु, सव्येन धारणं[3] दक्षिणेन स्तरणमिति । तस्मादिध्महोमार्थं दक्षिणेन गृह्णाति, तस्य[4] प्रधानत्वादभिघारणस्य अप्रधानत्वात् । तत्संस्कारत्वं न सव्येनाभिघारयतीति मत्वा इध्मं सव्ये कृत्वा दक्षिणेन स्रुवं गृहीत्वा मन्त्रेण तेनाभिघार्य निधाय स्रुवम्, पुनर्दक्षिणेन प्रत्यादाय इध्मं जुहोतीत्येवमर्थं दक्षिणेनेत्युक्तम् ॥ ९ ॥

स्रुवे......होति ॥ स्रुवेणाज्याहुतिं जुहोति । इह सिद्धमेतत् पुरस्ताद्वर्णितम्, अविहितपात्रेषु प्रवृताहुतिप्रभृतिषु स्रुवेण जुहुयादिति स्रुवाधिकारे । पुनः स्रुवग्रहणं किमर्थम्? तेनाज्याहुतीर्जुहोति[5] इति वक्तव्यम् । पुनः स्रुवग्रहणमभिघारणार्थम् । यदाज्यहोमसंयुक्तं तत्सर्वं स्रुवेण कुर्यादित्यर्थः । यद्येवं दधिघृतमिश्राणामित्येवमादिष्वपि स्रुवप्रसङ्गः । नैषः दोषः । तत्र दध्ना घृतेन च मिश्रीकृत्य पुनस्तद्धविर्भवति । इह पुनर्नानासंस्कृतयोरुभयोरवदानकाल एव मिश्रणं भवति; तस्मादिहाहुतिशब्देन वक्तुं शक्यते । प्रत्यभिघारणस्यावदानकालत्वाद्दोष इति चेत् तदपि होमार्थमेव क्रियते । सर्वस्य हविषः संहननार्थं न प्रत्यनक्तीति ह्येवमर्थं दर्शयति । तस्माददोषः[6] ॥ १० ॥

स्रुचा......वद्यति ॥ स्थालीपाकमित्यधिकारः । द्विरवद्यति । पाणिनावदाय स्रुचि निदधाति । न ह्यवदानपात्रमाम्नातमस्ति ॥ ११ ॥

त्रिर्जा......ग्न्यानाम् ॥ जामदग्न्यानां त्रिरवदानं भवति ॥ १२ ॥

१. A, T and L add गृहीत्वा
२. L omits पाणिभ्यां
३. A. धारिणं
४. L. अस्य
५. A omits जुहोति
६. L. त्वाददोषः

विवाह प्रतिश्रुतिहोम:



**उपस्तरणाभिघारणप्रत्यभिघारणं च सस्थालीपाके आ स्विष्टकृतः ॥१३॥ उत्तरार्धात् स्विष्टकृतः ॥१४॥ द्विरभिघारयति ॥१५॥ न प्रत्यनक्ति ॥१६॥ उत्तरपश्चार्धादग्नेरारभ्याविच्छिन्नं दक्षिणपूर्वार्धे जुहोति "त्वमग्ने प्रमतिः" इति ॥१७॥ दक्षिणपश्चार्धादग्नेरारभ्याविच्छिन्नमुत्तरपूर्वार्धे जुहोति "यस्येमे**

उप......कृतः ॥ उपस्तरणाभिघारणप्रत्यभिघारणमिति द्वन्द्वैकवद्भावः समासः। उपस्तरणमभिघारणं प्रत्यभिघारणं च स्थालीपाके भवति। आ स्विष्टकृतः स्विष्टकृता सह स्थालीपाकाधिकारे पुनः स्थालीपाकवचनं जामदग्न्याधिकारनिवृत्त्यर्थम्। अनन्तरस्य हि विधिप्रतिषेधो भवति मर्यादावचनार्थकः। स्थालीपाक इत्येव हि स्विष्टकृतोऽपि भवति। उपस्तरणादीन्यनेकानि प्रदानानीत्यनेनैव स्थालीपाकः क्रियते, न पुरोळाशादीन् प्रत्येकः स्थालीपाकः क्रियते इति ज्ञापनार्थम्; तर्हि मर्यादावचनम्, अनेकविषयत्वान्मर्यादायाः ॥ १३ ॥

उत्त......कृतः ॥ उत्तरार्धात् स्थालीपाकस्य सकृदेव स्विष्टकृतोऽवद्यति जामदग्न्यानामपि ॥ १४ ॥

द्विरभिघारयति ॥ स्विष्टकृदवदानम् ॥ १५ ॥

न प्रत्यनक्ति ॥ स्विष्टकृदवदानादूर्ध्वं न हविषि प्रत्यनक्ति। उपस्तरणं नाम केवले स्रुच्याज्येन सेचनम्। अवदाय पुनरासेचनमभिघारणं नाम। अवदाय पुनः शेषे उत्तरावदानसंस्कारार्थं प्रतिसेचनं प्रत्यभिघारणं नाम ॥ १६ ॥

उत्त......रिति ॥ स्थालीपाको निवृत्तः। अग्नेरुत्तरपश्चार्धादारभ्य अविच्छिन्नं दक्षिणपूर्वार्धे जुहोति "त्वमग्ने प्रमतिः" इत्यनयर्चा। अग्नेरिति वचनमनादीप्तकाष्ठनिवृत्त्यर्थम्। अविच्छिन्नमिति भाववाचित्वान्नपुंसकम्। अविच्छिन्नां धारां कृत्वा जुहोतीत्यर्थः ॥ १७ ॥

दक्षि......इति ॥ एवमेव दक्षिणपश्चार्धादग्नेरारभ्य उत्तरपूर्वार्धे जुहोति— "यस्येमे हिमवन्तः" इत्यनयर्चा ॥ १८ ॥

१. All except T. कृतोत्तरा-
२. A and T add न हविः प्रत्यभिघारयति
३. A[1] and IO omit दक्षिण... विच्छिन्नमु
४. L omits स्विष्टकृता सह
५. A omits धिकारे...नार्थकः स्थालीपाकः
६. L. नीत्येकेनैव
७. L omits एवमेव

हिमवन्तः" इति ॥१८॥ आघारौ ॥१९॥ आग्नेयमुत्तरमाज्यभागं सौम्यं दक्षिणम् ॥२०॥ "अग्ने यं यज्ञम्" "इमं यज्ञम्" इति ॥२१॥ "अग्नये स्वाहा" "सोमाय स्वाहा" इति वा ॥२२॥ मध्ये अन्या आहुतयः ॥२३॥ नाज्याहुतिषु नित्यावाज्यभागौ स्विष्टकृच्च ॥२४॥ नित्याहुतिषु चेति च माण्डूकेयः ॥२५॥ "अग्निर्जनिता स मेऽमूं जायां ददातु स्वाहा । सोमो जनिमान् स मामुया जनिमन्तं करोतु स्वाहा । पूषा ज्ञातिमान् स मामुष्यै पित्रा मात्रा

आघारौ ॥ एतावाघारौ । संज्ञासूत्रमिदम् ॥ १९ ॥

आग्ने......क्षिणम् ॥ आग्नेयमुत्तरमाज्यभागं जुहुयात् । सौम्यमाज्यभागं दक्षिणं जुहुयात् । मन्त्रत एव सिद्धे देवतानिर्देशो दिग्लक्षणार्थः कृतः । आज्यभागाविति संज्ञा । उत्तरं दक्षिणमित्यग्नेरुत्तरभागे दक्षिणभागे च जुहुयादित्यर्थः ॥

अग्ने......मिति ॥ आभ्यामृग्भ्यां यथाक्रममाज्यभागौ जुहुयात् ॥ २१ ॥

अग्न......ति वा ॥ "अग्नये स्वाहा, सोमाय स्वाहा" इति यथाक्रमम् ॥ २२ ॥

मध्ये......तयः ॥ अग्नेर्मध्येऽन्या आहुतयो होतव्याः ॥ २३ ॥

नाज्या.....कृच्च ॥ आज्येनाहुतयो यस्मिन्कर्मणि हूयन्ते तत्कर्माज्याहुतिः । तेष्वाज्याहुतिषु न नित्यावाज्यभागौ भवतः । विकल्पविधिरेषः । तथा स्विष्टकृच्च । अथवाहुतिशब्दः कर्मवाची, आज्यद्रव्यकेषु कर्मस्विति ॥ २४ ॥

नित्या......केयः ॥ नित्याहुतय उक्ताः । आचार्यग्रहणं कीर्त्यर्थम्, पक्षबलप्रदानार्थं वा, प्रत्ययदार्ढ्यार्थं वा, यथा राजपीतं पानीयमिति ॥ २५ ॥

अग्नि......ज्येन ॥ यथाविभक्त्यदस्स्थाने त्रिष्वपि मन्त्रेषु कन्यानामधेयनिर्देशः कार्यः । उक्तं च तत् । आज्येनेति न वक्तव्यम्, जुहोतीत्युक्ते सर्पिः प्रतीयेतेति पुरस्तादुक्तम् । सिद्धे वचनं नियमार्थम्; नियमश्चान्यनिवर्तकः । आज्यस्थालीपाकयोः प्रकृतयोः स्थालीपाकनिवृत्त्यर्थमाज्येनेत्युक्तम् । अथ कस्मान्मन्त्राणां स्वाहाकारान्तवचनत्वम्? ननूक्तं पुरस्तात् स्वाहाकारोऽन्ते होममन्त्राणामिति । ननु—

१. T. समे मूलायां ददातु
२. L. भाग इति संज्ञायत उत्तरं
३. L omits नियमार्थम्
४. L. आज्यनिवर्तकः
५. L. आज्यस्थालीपाकनिवृत्त्यर्थे

विवाह प्रतिश्रुति होम:



भ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहा" इत्याज्येन ॥२६॥ महाव्याहृतिसर्वप्रायश्चित्तान्तरमेतदावापस्थानमाज्यहविषि॥२७॥व्याहृतिस्विष्टकृतोः स्थालीपाके॥२८

इदमपि पुरस्तादेवोक्तम्—इतिकरणं स्वाहाकारश्च मन्त्रावधित्वसंज्ञानार्थमिति। तस्मादिह स्वाहाकारो मन्त्रावधिसंज्ञानार्थः। त्रय एते मन्त्रा इति ॥ २६ ॥

महा......विषि ॥ महाव्याहृतिसर्वप्रायश्चित्तानि वक्ष्यति। अन्तरशब्दो मध्यवाची। महाव्याहृतीनां सर्वप्रायश्चित्ताहुतीनां च मध्यं यत् एतदेवावापस्थानं भवति। आज्यहविषकर्मणि आवाप इति प्रधानं तस्य स्थानमावापस्थानम्, तत्सर्वमुक्तम्—"तमावाप इत्याचक्षते। तत्प्रधानं तदङ्गानीतराणि" इति। न च वयं महाव्याहृतीः पश्यामः, यासामन्तरमन्तरमावापस्थानं भवति। एतदेवोभयं भविष्यति, महाव्याहृतिविधानं तल्लक्षणं च। अप्रसिद्धोऽर्थः कथं लभ्यते? लक्षणविधानादेव प्रसिद्धिरनुमीयते। आज्यभागानन्तरं महाव्याहृतयो भवन्ति, अत ऊर्ध्वमावापस्थानं भवति। यास्तिस्रो व्याहृतयः पुरस्तादुक्तास्ता एव महाव्याहृतयः। तथा हि वक्ष्यति—अन्वारब्धायां महाव्याहृतिभिर्हुत्वा पुनः समस्ताभिश्चतुर्थीति च ब्रुवन् तिसृणामेव महाव्याहृतित्वं दर्शयति। बहुशश्चोक्ता व्याहृतयः। एवं महाव्याहृतय इति। एतदित्यधिकमावापस्थानमित्येतावता सिध्यति। एतदेव स्थानं होमानामपि केशाग्रच्छेदनादीनां कर्मणामपीति विधानार्थमेतदित्युक्तम्। तस्मात् प्रधानानन्तरमेवावापस्थान एव अन्यान्यपि कर्माणि कर्तव्यानि, न होमकर्माण्येव। एष उत्सर्गः। तत्र विशेषं वक्ष्यामः ॥ २७ ॥

व्याहृति···पाके ॥ व्याहृतिस्विष्टकृतोर्मध्ये आवापस्थानं भवति, स्थालीपाके स्थालीपाकद्रव्ये कर्मणि, व्याहृतिर्महाव्याहृतिरिति विशेषो नास्तीत्युक्तम्। इह स्विष्टकृतो निर्देशो नित्यत्वादाज्यहविषि स्विष्टकृतोऽनित्यत्वात् सर्वप्रायश्चित्तनिर्देशः। नैतदस्ति प्रयोजनम्। तत्रापि स्विष्टकृत इत्येव निर्देशः कर्तव्यः। तदुच्यते—द्विधा पक्षो हि

१. IO and A[1] व्याहृतिषु सर्व
२. T. Space is left out for writing अन्तर...आज्य
३. IO, A[1] and A[2] हृतिषु सर्वस्विष्ट-
४. T omits स्थालीपाके
५. L. प्रायश्चित्तानां
६. A. प्रतापस्य स्थान
७. A omits अतः
८. L adds इति
९. L omits समस्ताभिः...न त्वेव स्यात् See later.

"ततं म आपः" "उद्वयं तमसस्परि" "उदुत्यम्" "चित्रम्" "इमं मे वरुण" "तत्त्वा यामि" "त्वं नो अग्ने" "स त्वं नो अग्ने" "तदस्तु मित्रावरुणा" "वँषट्ते विष्णो" "इष्टेभ्यो वषळनिष्टेभ्यः" "भेषजं दुरिष्ट्यै निष्कृत्यै दौराध्यैं ऋद्ध्यै समृद्ध्यै" "देवीभ्यस्तनूभ्यः" "यत इन्द्र भयामहे" "त्वं नः पश्चात्" "अद्याद्याश्वश्वः" "सूर्यो नो दिवस्पान्तु" "भूर्भुवः स्वः" "अयाश्चाग्ने" इति सर्वप्रायश्चित्ताहुतीर्हुत्वा मनसा प्राजापत्यं महाव्याहृतयश्चतस्र

अर्थादेव प्रधानानन्तरं सर्वप्रायश्चित्ताहुतयो भवन्ति। तदा सर्वप्रायश्चित्तनिर्देशदोषः। कदाचित्प्रधानान्तरं स्विष्टकृद्भवतीति विकल्पार्थौ भवतीति सर्वप्रायश्चित्ताहुतीनां कार्यत्वज्ञापनार्थस्ताभिर्निर्देशः। इतरथा प्रायश्चित्तनिमित्ताः स्युः, संज्ञासामर्थ्यात्। एवं संज्ञावैयर्थ्यमिति चेत्, संज्ञाप्रयोजनमुत्तरत्र वक्ष्यामः। एवमप्यावापस्थानमेव विधातव्यम्, न हविर्निर्देशः कार्यः। द्विरावापस्थानं च। तथा पुरस्तात् अन्तरेणाज्यभागौ स्विष्टकृतश्चेति द्वाभ्यां हविर्भ्यां संबद्ध्य विधानं एते एव हविषी, इदं प्रकृतिश्च कर्मणि भवति ज्ञापनार्थम्। प्रयोजनं मांसस्यापि स्थालीपाकत्वम्। एते अप्रयाजा इत्येवं प्राप्तानां पुरोळाशादीनामपि स्थालीपाकभावः। कथं मांसस्थालीपाकत्वमिति चेत्, स्थाल्यां पच्यत इति स्थालीपाकम्; मांसं स्थाल्यां पक्त्वा स्थालीपाकधर्मेण जुहुयात्। एवं पशोः॥ २८॥

ततं......ब्रह्मणः ॥ इह "भूर्भुवस्स्वः" इत्येषः मन्त्रः। यथा पुरस्तात् "अयाश्चाग्ने" इति मन्त्रादिर्गृह्यते, न तु कृत्स्नाम्नातः, तदुक्तम्—"पुरस्तादाम्नातस्य मन्त्रस्यादिग्रहणं मन्त्रं प्रतीयात्, न यावदुक्तमिति" इति। सर्वत्र प्रायश्चित्ताहुतीर्हुत्वा मनसा प्राजापत्यमाहुतिकर्म करोति। मनसा मन्त्रमनुस्मृत्य जुहुयादित्यर्थः। "प्रजापते न त्वत्" इति त्रिमन्त्रः यदुत्तरत्र वक्ष्यामः, प्राजापत्यानां प्रागुक्तानां सर्वप्रायश्चित्ताहुतिसंज्ञानित्यत्वमेतासामन्वर्थसंज्ञा प्रयोजनम्। सर्वेषु दोषेषु एता एव प्रायश्चित्ताहुतय इत्येवमर्थः। यद्येवं नित्या अपि प्रत्यपराधं पुनः पुनरावर्तेरन् सकृत्प्रयुक्ता एव नित्यकार्यप्रायश्चित्ताहुतिकार्यं कुर्वन्ति। नित्यानामेव संज्ञादर्शनम्। अधुना महाव्याहृतिः सर्वप्रायाश्चित्तान्तरमिति यदि सर्वप्रायश्चित्तान्तरमिति पुनः प्रयोग इष्टः स्यात्। केवला एव विधाय पुनरेता एव

१. A² omits this word.
२. A² omits तमसस्परि
३. T. मित्रावरुणौ
४. T. षट्ट ते
५. A². ससर्वं

**इत्येता आहुतीर्हुत्वा सव्ये पाणौ ये कुशास्तान् दक्षिणेनाग्रे संगृह्य मूले सव्येन तेषामग्रं स्रुवे समनक्ति मध्यमाज्यस्थाल्यां मूलं च । अथ चेत् स्थालीपाकेषु स्रुच्यग्रं मध्यमं स्रुवे मूलमाज्यस्थाल्यां ताननुप्रहृत्य "अग्नेर्वासोऽसि" इति समिधोऽभ्याधाय यथोक्तं पर्युक्षणमनुप्रहृत्य परिधीन्नवा नित्ये प्रणीताः परिगृह्य दिशो व्युदुक्षति त्रिस्त्रिः प्राच्यां प्रथममेवं प्रदक्षिणं प्रतिदिशमूर्ध्वं च प्राचीं निनीय उदीचीर्वा ताः स्पृष्ट्वा प्राणान्मुखं च संमृशति । उत्सर्जनं ब्रह्मणः ॥२९॥**

सर्वप्रायश्चित्ताहुतय इत्यवक्ष्यत् । किञ्च आहुतिशब्दसामर्थ्याद् द्रव्यादीनां नाशदोषे पुनरुत्पत्तिः स्यात् । सर्वासामिदमपि संज्ञाप्रयोजनमनिदंप्रकृतिके कर्मणि विध्यपराधे एता आहुतयो होतव्याः । तत्र कुशतरुणच्छेदादिराज्यधर्मः कर्तव्यः । महाव्याहृतयश्चतस्र इति मन्त्रविधानम् । मन्त्रविधानादाहुतिविधानम् । इत्येता आहुतीर्हुत्वा ततः सव्ये पाणौ ये कुशाः पूर्वं गृहीताः "सव्येनापनोति" इति, तान् दक्षिणेन पाणिना अग्रे सङ्गृह्य । इह सव्यप्रसङ्गाद्दक्षिणेनेत्युक्तम् । संहृत्येति[संगृह्येति] सह गृहीत्वेति । मूले सव्येन संगृह्य तेषामग्रं स्रुवे आलेपेन समनक्ति । मध्यमाज्यस्थाल्यां समनक्ति मूलं च । अतः [अथ] स्थालीपाकेषु चेत्कर्मसु स्रुच्यग्रं मध्यं स्रुवे मूलमाज्यस्थाल्यामिति—समनक्तीति संबन्धः । ततः तान् "अग्नेर्वासोऽसि" इत्यनुप्रहृत्य समिधोऽभ्याधाय । समिध इति बहुवचननिर्देशात्तिस्रः समिधः स्युराहिताः बहुत्वादि न्यायाप्राप्तमेव इति । एवम् "प्र त्वा मुञ्चामीति तिसृभिः" इत्येवमादिषु त्रिग्रहणानर्थक्यम् एवमादिभिस्त्रिवचनज्ञापनार्थम् । "स्वस्त्ययनानि च जपित्वा" इत्येवमादीनां मन्त्राणां केवले बहुवचने त्रिप्रभृत्यनियम इति । न च कृत्स्नविधानम् । यदि कृत्स्नविधानं स्याद् "भुञ्जानेषु महाव्याहृतयः सावित्री मधुवातीयाः पितृदेवत्याः पावमान्यश्च जपेत्" इत्येवमादिष्वशक्यं विधानं स्यात् । तस्मादादिबहुत्वं न्याय्यम् । अपे त्वनियमः त्रित्वे सिद्धः । भूयस्त्वे फलभूयस्त्वम् । यथोक्तं पर्युक्षणं कृत्वा परिधीननुप्रहृत्य । न वा नित्ये कर्मणि । प्रणीता दक्षिणेन पाणिना परिगृह्य दिशो व्युदु-

१. T. सव्ये तेषां

२. T. समिधमाधाय

३. T. त्येते

४. $A^1$, $A^2$ and IO व्युदुक्षितिः

५. T. प्राचीः

६. $A^1$ and IO omit वा

७. T. संस्पृशति

## अथ षष्ठः खण्डः

¹व्याख्यातः प्रतिश्रुते होमकल्पः प्रकृतिर्भूतिकर्मणाम् ॥१॥ सर्वासां चाज्या-

क्षति। अविशेषेणोक्ते चतस्रो दिशः स्युः। अभिलष्युदुक्षति [?]। प्राच्यां दिशि प्रथमं प्रदक्षिणं प्रतिदिशम्। एवमूर्ध्वं च। शेषाः प्राचीं निनीय ताः स्पृष्ट्वा प्राणान्मुखं च संमृशति। प्राणानित्युक्ते नासिके मुखं चक्षुषी श्रोत्रौ नाभिश्च भवतीति पुरस्तादुक्तम्। तत उत्सर्जनं ब्रह्मणः कर्तव्यम् ॥ २९ ॥

## अथ षष्ठः खण्डः

व्याख्या......र्मणाम् ॥ "प्रतिश्रुते जुहोति" इत्यारभ्य यो व्याख्यातो होमकल्पः सा प्रकृतिर्भूतिकर्मणाम्। विवाहचूडाकरणोपनयनकेशान्तसीमन्तोन्नयनानि भूतिकर्माणीत्युच्यन्ते। नैतानि भूतिकर्माणि; न हि शास्त्रे लोके वा एतेषां भूतिकर्मसंज्ञा; अपि च यद्येतानि भूतिकर्माणि, पृथग्वचनमनर्थकम्; आज्याहुतित्वाच्चरुपाकयज्ञत्वाच्चैतेषाम् इयं प्रकृतिः सेत्स्यति। तथा हि वक्ष्यति "सर्वासां चाज्याहुतीनां चरुपाकयज्ञानां च" इति। तस्मादे[नै]तानि भूतिकर्माणि। एवं तर्हि प्रकृतिरूपोऽयं संज्ञाविधिः। कथमिति चेत्, संज्ञादर्शनात् संज्ञास[संज्ञ्यनु]मानम्। यथा धूमदर्शनात् अग्न्यनुमानं एवं संज्ञान्येतान्येव प्रकृतीनि। न ह्यन्यानि पश्यामः। तस्मात् संज्ञाविधानादन्येषां संज्ञानामदर्शनाच्च एतेषां प्रकृतित्वादेतानि भूतिकर्माणीति मन्यामहे। अपि च भूतिर्महत्त्वे। एतान्येव महान्ति कर्माणि लोके तेषु। तस्मादेतानि भूतिकर्माणि। न ह्यन्यानि भूतिकर्माणि शास्त्राविरोधेन पश्यामः। सम्पूर्णस्यार्थस्यासम्भवेऽणुरप्यर्थो युक्तितो ग्राह्यः। तदुक्तम्—"अणुरप्यर्थसम्बन्धः सत्सु समानकारणं ममैव बाला भवन्तो बादरायणाः" इति। संज्ञाप्रयोजनं सर्वेष्वेव भूतिकर्मसु तन्त्रम् ॥ १ ॥

सर्वा......नां च ॥ सर्वासां चाज्याहुतीनां चेयमेव प्रकृतिः। सर्वग्रहणमस्य शास्त्रविधेयानामेव काम्यानां कर्मणामियमेव प्रकृतिः। यदि प्रधानाहुतय आज्याहुतयः, तत्र शाखापशूनां चरुपाकयज्ञानां च तथा। इह द्वौ चशब्दौ किमर्थं निर्दिष्टौ? सर्वासामाज्याहुतीति वक्तव्यम्। एकः चशब्दः समुच्चयार्थः; इतरः पशुचरुपाकयज्ञयोरपि सर्वशब्दानुकर्षणार्थः। शाखापशुरिति पाकयज्ञभूतस्य पशोः संज्ञा अल्पवाची। अनया दिशा शाखाशब्दः शाखायां पशुं बध्नाति वा ॥ २ ॥

१. T. व्याख्यातः प्रतिश्रुतेः A¹ and A² व्याख्यात

हुतीनां शाखापशूनां चरुपाकयज्ञानां च ॥२॥ अनाम्नात[1]मन्त्रास्वादिष्ट-देवतासु "अमुष्मै स्वाहा" इति शुद्धेन ॥३॥ यदि[2] पाकयज्ञाः समानकालाः[3]

अना......द्धेन ॥ अनाम्नातमन्त्राः स्वाहुतिषु आम्नाता मन्त्रा यासां न सन्ति ता आदिष्टदेवताः। अनेन मन्त्रेण जुहोतीत्यविहितमन्त्रासु आदिष्टदेवतासु अग्नये इन्द्रायादित्याय विश्वेभ्यो देवेभ्य इत्येवमादिषु अमुष्मै स्वाहा इति शुद्धेन देवतानामधेयेन स्वाहाकारान्तेन जुहुयात्। अग्नये स्वाहा इन्द्राय स्वाहा इत्येवमनाम्नातमन्त्रास्वादिष्टदेवतासु सर्वे तद्दैवत्या मन्त्राः प्राप्ता, मन्त्राणामर्थवत्त्वात्। एवं प्राप्तानां पुनः कर्मण्यनाम्नातानि[म्नानं] नियमार्थमयमेव स्यात्, नान्ये तद्दैवत्या इत्येवम्। अर्थाद् देवतानिमित्तमन्त्रेषु प्राप्तेष्विदमुच्यते, अमुष्मै स्वाहा इत्येव जुहुयात, न मन्त्रेणेति। मन्त्रान्ते चाप्यमुष्मै स्वाहेति वक्तुं शक्यत इति मत्वा शुद्धेनेत्युक्तम्। शुद्धेन केवलेन देवतादेशेन जुहुयात्। आदिष्टदेवतास्विति वक्तव्यम्; न ह्यनाम्नातमन्त्रा अनादिष्टदेवता आहुतय उपलभ्यन्ते। ज्ञापकार्थं ह्यादिष्टदेवतास्वित्युक्तम्। अनाम्नातमन्त्रास्वादिष्टदेवतास्विति तद्विशेषणमाम्नातमन्त्रा अप्याहुतय आदिष्टदेवता एवेति ज्ञापयति। यद्दैवत्यो मन्त्रः सा देवता तत्रेति। तेन "अग्निना देवेन" इत्येवमादिषु अनादिष्टदेवतास्वग्न्यादिदेवता ज्ञातव्येति सिद्धं भवति ॥ ३ ॥

यदि......र्व्येण ॥ [यदि] दैवाद्वा मानुषाद्वा पाकयज्ञाः समानकालाः स्युरावापस्थाने विधानान्येवावर्तयेदानुपूर्व्येण प्राप्तिक्रमेण। तद्यथा यदि सद्यस्कालं विवहयं [वाहादि] कर्म स्यात् तत्रैकस्मिन्नेव तन्त्रे प्रतिश्रुतिहोमरात्रिहोमानां प्रधानान्यावापस्थाने यथाक्रमं स्युः। आवापस्थान इत्यनुच्यमाने लुप्ततन्त्राणां प्रधानानां पृथगेव प्रयोगः स्यात्। प्रधानान्येवेत्यनुच्यमाने साङ्गानामावापस्थाने प्रयोगः स्यात्। आनुपूर्व्येणेत्यनुच्यमाने प्रकृतितन्त्रिणः प्रथमं प्रयोगः स्यात्। तस्य हि तन्त्रे इतराणि हूयन्ते। यथा सवनीयकाले समानतन्त्राः पशव इत्यत्र सवनीयादूर्ध्वमग्नीषोमीयं तद्वदेव विवाहकरणतन्त्रे विहितानामेव प्रधानानामावर्तनं स्यात्, न पुरस्ताद्धोमोपरिष्टाद्धोमेति वक्ष्यमाणानामित्येवमर्थम्। तासामपि हि प्राधान्यं वक्ष्यते। अथ वा प्रधानान्यावर्तयेदेव, न नावर्तयेदिति द्वयोरपि रात्रिहोमयोः सामर्थ्यमपेक्ष्य सकृत्प्रयोगो न स्यात्। कन्यायाः पुंसश्च यथाविहितं द्विरावर्तयेदेव ॥ ४ ॥

१. T. म्नातः

२. T omits यदि

३. T. समाकालाः

स्युरावापस्थाने प्रधानान्येवावर्तयेदानुपूर्व्येण ॥४॥ त एते अप्रयाजा अननुयाजा अनिळा अनिगदा असामिधेनीकाश्च सर्वे पाकयज्ञा भवन्ति ॥५॥ तदपि श्लोकाः ॥६॥—

हुतोऽग्निहोत्रहोमेन अहुतो बलिकर्मणा।
प्रहुतः पितृकर्मणा प्राशितो ब्राह्मणे हुतः ॥

त ए......वन्ति ॥ त इति नित्यं नैमित्तिकं काम्यं च हविर्यज्ञाः पूर्वप्रकृता उच्यन्ते। ते हि प्रयाजवन्तस्ते हविर्यज्ञा अपि। प्रयाजाश्चैष आधारयज्ञो भवति। अप्रयाजा अनिगदा अनिळा अननुयाजा इति प्रतिषेधः कर्तव्यः। प्रयाजानन्तरमनुयाजग्रहणं तन्मध्यपतितानां ग्रहणार्थम्। तस्मात् सूक्तवाकादीनां निवृत्तिः। यद्येवं तन्मध्यपतितानां सामिधेनीनां पुनः प्रतिषेधः किमर्थः? इध्मस्य विद्यमानत्वं तदर्थत्वाच्च तासां प्राप्तिं मत्वा सामिधेनीनां मध्यपतितानामपि प्रतिषेधः कृतः। तस्मादेव च सामिधेनीविधानमिध्मसङ्ख्याविधानं मन्तव्यम्। पाकयज्ञस्य होमत्वात् ततो ह्याज्यधर्मनिवृत्तिः। तस्माद्यथाप्राप्तानामाज्यादीनां पुरोनुवाक्यामनूच्य याज्यया जुहोति। वास्तोष्पतीयवदाज्यभागौ इहाम्नातौ। नैष दोषः। इहाम्नातावाज्यभागाविहाम्नातानामेव भवतः। स्विष्टकृति च स्विष्टकृन्निगदप्रतिषेधश्च तेषामेव प्राप्तिं दर्शयति। ययोरेव हविषोराज्यस्थालीपाकत्वप्रतिषेधः पुरोडाशानामपि स्थालीपाकत्वं न भवति, तदुक्तम्—"उपांशुयाजेन्द्रमहेन्द्रावाज्यम्" इति। अस्माकं तु उपांशुयाजानिवृत्तिः आज्यस्य विद्यमानत्वात्, प्रतिषेधाभावाच्च। आज्यौषधस्य मांसस्य कथं प्रतिश्रुतिहोमप्रकृतित्वमिच्छेत्[मिति चेत्], वचनात्। न ह्यस्य वचनस्यातिभारोऽस्ति। तस्मान्निरूढपशूनामपि पाकयज्ञत्वं भवति ॥ ५ ॥

तदपि श्लोकाः ॥ तत्र श्लोका अपि भवन्ति ॥ ६ ॥

हुतो.....,व च ॥ प्रथमश्लोकेन पाकयज्ञनिर्वचनमुक्तम्। अग्नौ होमोऽग्निहोत्रम्। अग्निहोत्रहोमेनेति अग्नौ होमकर्मणा हुतो नाम पाकयज्ञो भवति। तथा बलिकर्मणा [अहुतो नाम पाकयज्ञो भवति। पितृकर्मणा] प्रहुतः। ब्राह्मणे हुत इति

१. T. सामिधेनी
२. All except IO. प्राहुतो
३. A, A[1] and IO ब्राह्मणो
४. The portion within brackets is missing in both the manuscripts.

अनूर्ध्वज्ञुर्व्यूळ्हजानुः जुहुयात् सर्वदा हविः ।
न हि बाह्यहुतं देवाः प्रतिगृह्णन्ति कर्हिचित् ॥
रौद्रं च राक्षसं पित्र्यमासुरं चाभिचारिकम् ।
उक्त्वा मन्त्रं स्पृशेदाप आलभ्यात्मानमेव च ॥७॥

## अथ सप्तमः खण्डः

अथैतां रात्रीं श्वस्तृतीयां वा कन्यां वहिष्यन्तीति तस्यां रात्र्यामतीते निशाकाले सर्वसुरभिमिश्रैः फलोत्तमैः सशिरस्कां कन्यामाप्लाव्य रक्तमहतं

"अग्निवद् ब्राह्मणः" इति निर्दिष्टहोमद्रव्यवचनम् । ब्राह्मणाय अन्नदानेन प्राशितो भवतीत्यर्थः । ब्राह्मणे हुत इति प्रथमया विहितनिर्देशः श्लोकप्रसिद्ध्यर्थः ॥ अनूर्ध्वज्ञुः व्यूळ्हजानुर्भूत्वा सर्वदासीनो हविर्जुहुयात् । न हि बाह्यहुतं जानुबहिर्भूतेन पाणिना हुतं देवाः प्रतिगृह्णन्ति, कर्हिचिदपि न प्रतिगृह्णन्ति । होतृरूपोऽयं विधिः । व्यूळ्हजानोरभ्यन्तरे पाणी भवतः । कर्हिचिदिति विद्यागुणयुक्तेऽपि प्रतिषेधार्थः ॥ बलाधानार्था निद्रा[र्थो रौद्रः] । रुद्रोऽस्य मन्त्रस्य देवता इति रौद्रो मन्त्रः । एवं राक्षसपित्र्यासुराभिचारकाः शत्रुपीडार्था मन्त्राः । एतान्मन्त्रान् कर्मण्युक्त्वोपस्पृशेत् । पाणी प्रक्षालयेदित्यर्थः । आत्मानमेव च कर्ममध्य उपस्पृशेत् ॥ ७ ॥

## अथ सप्तमः खण्डः

अथै......येति ॥ अथेत्यधिकारनिवृत्तौ भवति । परिभाषा हि प्रकृता एतां रात्रिं श्वस्तृतीयां वेति । सप्तम्यर्थे द्वितीया । श्वो वा तृतीये वाहनि कन्यां वहिष्यतीति शब्देनाहोरात्र उच्यते । तथाशब्देनापि तदवयवत्वात् तस्यां रात्र्यामिति तेषां त्रयाणामभिप्रेतेऽहन्यतीते निशाकाले; अतीत इति अवगाढे; निशाकाले रात्र्यामित्यर्थः । सर्वसुरभिमिश्रैः फलोत्तमैः फलप्रधानैः सशिरस्कां कन्यामाप्लाव्य । अथ कस्मात् फलोत्तमैरिति पृथगुक्तम् । उत्तमफलमिति गन्धद्रव्यमेव । न खलु मुखवासद्रव्यं तद् गन्धद्रव्यमेव भवति । यद्येवं तस्य नित्यत्वार्थमितरेषां गन्धद्रव्याणां यथोपपादत्वार्थं च । सर्वसुरभिमिश्रैः फलोत्तमैरिति फलप्रधानमुक्तम् । अथवा केशसंस्कारार्थान्यामलकानि सन्ति; तैः फलोत्तमैः एवमाप्लाव्य रक्तमहतं वासः परिधाप्य प्रदक्षिणमग्नेः पर्याणीय । प्रदक्षिणमग्निमिति वचनात्

१. T. चारकम्
२. T. स्पृ आलभ्य
३. T omits सर्व
४. T adds वा

वासः परिधाप्य प्रदक्षिणमग्निं पर्याणीय[1] पश्चादग्नेः कन्यामुपवेश्य आघारावाज्यभागौ हुत्वा[2] अग्नये सोमाय प्रजापतये मित्राय वरुणाय इन्द्राय[3] इन्द्राण्यै गन्धर्वाय भगाय पूष्णे त्वष्ट्रे बृहस्पतये राज्ञे प्रत्यानीयेति ॥१॥ चतस्रोऽष्टौ वा

आघाराभ्यां प्रागग्निकार्यमिति मन्यामहे! आचार्येणैव "पश्चादग्नेः कन्यामुपवेश्य" [इत्यत्र]पश्चादग्नेरिति पुनरग्निग्रहणमन्यत्रोक्तार्थो न होमादिष्वाचार्य एव पश्चादुपविशतीति ज्ञापनार्थः। कन्यामुपवेश्येति पुनः कन्याग्रहणं वरस्यापि प्रकृतत्वाद्वरेण सह होममन्त्रश्रुतिः। कन्यामेव पश्चादग्नेरुपवेश्याचार्यो जुहुयादित्येवमर्थम्। उत्तरत्रैता एव देवता इति वरस्याभिधानात् न वरस्य प्राप्तिरिति चेत्, नत इह सूत्रे पुनस्तत्र च वरस्य कन्यायास्तद्बाधनं भविष्यति। तस्मात्सुष्ठूक्तम्, वरस्य निवृत्त्यर्थं पुनः कन्याग्रहणमिति। आघारावाज्यभागौ हुत्वा। अग्नय इत्याज्यभागानन्तरं प्रधानदेवतैवेति सम्बन्धप्रदर्शनार्थमुक्तम्। तेनाज्यभागानन्तरभूतानां महाव्याहृतीनां निवृत्तिः। इह द्विधा महाव्याहृतयः प्राकृत्यः तिस्रः पुरस्ताच्चोपरिष्टाच्चेति वक्ष्यमाणाश्च पुरस्ताद्व्याहृतयश्चतस्रश्चोक्ताः सतीनां निवृत्तिराज्यभागानन्तरमग्निश्रवणम्। एवं तर्ह्याघारग्रहणं किमर्थम्? आज्यभागौ हुत्वाग्नय इत्येव वक्तव्यम्। तथा सत्याघारावपि निवृत्तौ भवत, अङ्गानां परिसङ्ख्यानात्। तदुक्तम्—"पुरस्तात् परिसङ्ख्य प्रकृतिं निवर्तयति" इति। तस्माद्यथोक्तमेव ज्यायः। का एता देवताः? अग्न्यादयो द्वादश। राज्ञे प्रत्यानीयेत्यत्र स्थानविपरीतपठित इतिशब्दः राज्ञे प्रत्यानीयेति। इह प्रतिशब्दो वीप्सार्थः, प्रति प्रति आनीयेति—अग्नये राज्ञे, सोमाय राज्ञे, इत्यनुषज्य जुहोतीत्यर्थः। इन्द्राण्यै इत्यत्र राज्ञ्यै इति स्त्रीलिङ्गनिर्देशः कार्यः, विशेषणविशेष्ययोरेकाभिधायकत्वात्। वाचनिकमिदं पुंलिङ्गवचनमस्तीति चेन्न, पुंलिङ्गप्रायकत्वात पुंलिङ्गोद्देश इति वचनमेव वाचनिकमिहास्तु। त्वष्ट्रे[4] रूपेभ्यः पूष्णे पशुभ्य[5] इत्येवमादिषु देवताशब्दयोर्विशेषणविशेष्ययोर्व्यभिचारदर्शनात्। अथवा तद्वाचनिकमिह पुंलिङ्गनिर्देशप्रियत्वाचीत्यस्ति हि न्यायगतिः। तस्मात् पुंलिङ्गनिर्देश एव कार्यः॥ १॥

चत......कुर्युः॥ होमकर्म परिसमाप्य चतस्रो वा अष्टौ वा अविधवा इति पुंश्चल्यः। ता ह्यविधवाः सर्व एव भवन्ति। द्वविध्यं वाविधवा[विविधधवा]इति वा इह

१. All except A². पर्यानीय
२. T. ज्ञात्वा
३. T omits इन्द्राय
४. T. च
५. A repeats पशुभ्यः

अविधवाः शाकपिण्डिभिः सुरयान्नेन च तर्पयित्वा चतुरा नर्तनं कुर्युः ॥२॥ एता एव देवताः पुंभ्यो वैश्रवणमीशानं च ॥३॥ ततो ब्राह्मणभोजनम् ॥४॥

## अथ अष्टमः खण्डः

स्नातं कृतमङ्गलं वरमविधवाः सुभगा युवत्यः कुमार्यै वेश्म [2]प्रपादयन्ति ।

निर्वक्तव्यम् । विधवा इत्येव तत्र भवति शाकपिण्डिभिः अथवा [१] शाकपिण्डिभिः सुराद्रव्यैः सुरयान्नेन च तर्पयित्वा । तर्पयित्वेति कालविधिः । एवं कृते ततश्चतुरा नर्तनं कुर्युः । चतुरा नर्तनं नाम चतसृभिः सह नर्तनं कर्तव्यम् । तथा हि प्रसिद्ध-मायमपथे ॥ २ ॥

एता......नं च ॥ एता एव देवताः पुंभ्योऽपि भवन्ति । देवतानिर्देशे नाम-निर्देशः । पुंभ्य इति पारस्येत्यर्थः । वैश्रवणमीशानं च जुहुयात् । चशब्दः समुच्च-यार्थः, एता देवताः । पुंभ्य इत्येतावता सिद्धे एवकारकरणमेवमेवेतीहाम्नातयोऽ-रप्यनुषङ्गविधानार्थः । तस्माद् वैश्रवणाय राज्ञ ईशानाय राज्ञे इति भवति । इतरथा न स्यादन्यप्रकरणत्वाद्देवताविधानाद् यथाकालं यथाप्रकृति कृत्स्नं कर्म भवति । यदि रात्रौ तद्वदिष्टमभविष्यत्, तद्वदेतत् ॥ ३ ॥

ततो ब्राह्मणभोजनम् ॥ कारयेत् । वरस्यैवमेव विधानं पुंभ्य इत्यधिकारः ॥

## अथ अष्टमः खण्डः

स्ना......केभ्यः ॥ स्नातं कृतमङ्गलं वरमिति । अन्यार्थेऽपि वाक्ये स्नानमङ्ग-लयोः कर्माङ्गयोर्विधानमेतत् । तस्माच्छुद्धोऽपि विवाहकाले स्नातं करोतीति कृत-मङ्गलोऽपि पुनस्तदर्थं मङ्गलं करोति । प्रसिद्धया शास्त्रान्तरेषु च मङ्गलमुपलभामहे । अविधवाः सुभगा युवत्यः इहार्यमङ्गलस्त्रियोऽभिप्रेताः । एवंविधाः शुद्धा मङ्गल-स्त्रियोऽभिगम्य वरं स्नातं कृतमङ्गलमलङ्कृतं सहैव कुमार्यै वेश्म प्रपादयन्ति । कुमार्यै इति षष्ठ्यर्थे चतुर्थी । तासां स्त्रीणामप्रतिकूलः स्यात् । ता यद् ब्रूयुः तत् कुर्यादित्यर्थः । कथम्? अविशेषेणान्यत्राभक्ष्यपातकेभ्यः, अभक्ष्यपातकानि वर्जयित्वा । अभक्ष्यपातकानामेव प्रतिषेधात् एभ्योऽन्यस्मृतिशास्त्राविरुद्धमपि कुर्यादेव । ताश्च हि सर्वाः सह विरुद्धान्न ब्रूयुः । शास्त्रं विरुद्धं तस्माद्धितार्थमसुं न कुर्यात् । न हि तासां वचनमशास्त्रविहितं मन्तव्यम् । तासां वचनं प्रमाणीकृत्याचार्य उक्तवान्,

१. T. चतस्रो वा

२. A¹, T and IO. प्रपातयन्ति

तासामप्रतिकूलः स्यादन्यत्राभक्ष्यपातकेभ्यः ॥१॥ ताभिरनुज्ञातोऽथास्यै वासः प्रयच्छति "रैभ्यासीत्" इति ॥२॥ "युवं वस्त्राणि" इत्यस्मै ॥३॥ "चित्तिरा उपबर्हणम्" इत्यञ्जनकोशमादत्ते॥४॥ "समञ्जन्तु विश्वे देवाः" इति समञ्जनीया ॥५॥

"यथेयं शचीं वावातां सुपुत्रां च यथादितिम् ।
अविधवां चापालामेवं त्वमिह रक्षतु ॥"

इति दक्षिणे पाणौ शलली त्रिवृतां ददाति ॥६॥ "रूपं रूपम्" इत्यादर्श

"तासामप्रतिकूलः स्यात्" इति। तस्मात्तदपि शास्त्रविहितमेव। तस्माद्विहिताविरोधे न दोषः ॥ १ ॥

ताभि......दिति ॥ ताभिः स्त्रीभिरनुज्ञातः, अथास्यै कुमार्यै वासः प्रयच्छति "रैभ्यासीत्" इत्यनयर्चा ॥ २ ॥

युव......त्यस्मै ॥ तस्मै वराय यदा वाससी प्रयच्छति तदा "युवं वस्त्राणि" इत्यनयर्चा प्रयच्छति। उत्तरत्र हि वक्ष्यति—"वाससी प्रतिगृह्य" इति। प्रदानप्रतिग्रहयोरेककालत्वात् स एव प्रदानकाल इति मन्यामहे। इह वचनमाधिकारार्थम्। तस्मान्नायं प्रदानकालः। अथ कथं वासः प्रयच्छतीत्येकवचननिर्देशः? अधिकाराद्द्वयोर्वाचक इति चेत्, अर्थाद्विपरिणामः। प्रयच्छतेर्नामधेयमर्थमपेक्ष्य हि वचनं भवति लिङ्गं वा ॥ ३ ॥

चित्ति···दत्ते ॥ अञ्जनकोशम् "चित्तिरा उपबर्हणम्" इत्यनयर्चा आदत्ते ॥४॥

सम···नीया ॥ समञ्जनार्हा समञ्जनीया। "समञ्जन्तु विश्वे देवाः" इत्येनां समञ्जन्ति। समञ्जातनी इति वा पाठः। उरोदेशमानीय इति ॥ ५ ॥

यथे......दाति ॥ "यथेयम्" इत्यनेन मन्त्रेणास्या दक्षिणे पाणौ शललीं त्रिवृतां ददाति। वर्णविशेषेण शलली त्रिवृद्भवति ॥ ६ ॥

रूपं......सव्ये ॥ "रूपं रूपम्" इत्यनयर्चा सव्ये पाणौ आदर्शं ददाति। "रूपं रूपं मघवा बोभवीति" प्रथमप्राप्तापि भवति, प्रतिरूपं इत्यादर्शलिङ्गात् ॥ ७ ॥

१. T. Space is left out for writing अस्यै...च्छति

२. A[1]. प्रयजन्ति

३. T. Space is left out for writing शचीं...पुत्रां

सव्ये ॥७॥ रक्तकृष्णमाविकं क्षौमं वा त्रिमणि प्रतिसरं ज्ञातयोऽस्या बध्नन्ति "नीललोहितम्" इति ॥८॥ "मधुमतीरोषधीः" इति मधूकानि बध्नाति ॥९॥ विवाहे गामर्हयित्वा गृहेषु गतेषु कान्तानां माधुपर्कि-

रक्त......मिति ॥ रक्तकृष्णमाविकं वर्णं क्षौमं वा त्रिमणि त्रिबन्धं प्रतिसरमस्या ज्ञातयो बध्नन्ति । सव्य इत्यधिकारादस्याः सव्ये पाणौ बध्नन्ति ॥ ८ ॥

मधु......ध्नाति ॥ "मधुमतीरोषधीः" इत्यनयर्चा मधूकानि बध्नाति । सव्य इत्यधिकारः । ज्ञात्यधिकारो निवृत्तः । एकवचननिर्देशाद्वर एव बध्नाति । मधूके विवदन्ते । यष्टिमधूकं केचिद् ब्रुवते, मधूकवृक्षं पकं केचित् । तत्र योऽर्थः प्रसिद्ध्या मन्त्रलिङ्गेन वा अविरुद्धः स ग्राह्यः ॥ ९ ॥

विवा......कीर्त्यः[क्यः] ॥ विवाहे कान्तानां गृहेषु गतेषु वरणे सह तेषां कान्तानामयं वरो माधुपर्किक्यो भवति गामर्हयित्वा । मधुपर्कार्हो माधुपर्किक्यः । मधुपर्केण कृत्स्नं कर्म द्योत्यते, न द्रव्यमेव । यद्येवं कर्माङ्गभूता गौर्विद्यते । अथ कस्मात् गामर्हयित्वेत्युक्तम् ? इह गामर्हयित्वेति गवां पूजां कृत्वा गां दत्त्वेत्यर्थः । तस्मात् किञ्चित्तस्य दातव्यम् । अथवोक्तेभ्यष्षड्भ्योऽन्ये ज्ञातितः सम्बन्धितश्च विशिष्टा मधुपर्कार्हाः; तेषां गौर्नास्ति; अन्येषु चायमेव गौर्मधुपर्क इति सर्वस्यैतस्य ज्ञापनार्थं गामर्हयित्वेत्युक्तम् । इदं तावदुच्यताम्—स्नातकोऽयमाहोस्विन्न? यदि स्नातकः, स्नातक इत्येवं मधुपर्कार्हो भवति । यः[यदि] पुनर्न्याय[पुनर्न] स्नातकः इदं तावदुच्यताम् । कः स्नातको नाम? विद्याव्रतस्नातकः । अन्यतरस्नातकमपि स्नातकं केचिद्ब्रुवते । अथापि ब्रुवते गृहस्थः पुनः स्नातकव्रतसंयोगात् स्नातको भवति । तथाह्याह "स विधिपूर्वं स्नात्वा भार्यामधिगम्य यथोक्तान् गृहस्थधर्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत्[नुतिष्ठेत्] स्नातकः" इति । अस्मिन्पक्षे नायं स्नातकः । पूर्वस्मिन्नपि पक्षे सर्वो विद्याव्रतस्नातक एव । कन्यां वीक्ष्येत्यन्यतरस्नातकोऽपि यदापि वक्ष्यति तथा मधुपर्कार्हो भवतीत्येवमर्थमभिधानम् । यदायं स्नातको वरो भवति, तदा "षळर्घ्या

१. T Space is left out for writing रक्त...कं क्षौ
२. All except A². मधुकानि



K—5

क्यः ॥१०॥ न त्वेवामांसोऽर्घ्यस्स्यादधियज्ञमधिविवाहम् ॥११॥ कुरुत इत्येव ब्रूयात् ॥१२॥ "बृहस्पतये त्वा मह्यं वरुणो ददातु । सोऽमृतत्वमशीय । त्वद्दातृभ्योरधिमयो मह्यं प्रतिगृह्णते" इति वाससी प्रतिगृह्य परिधायोपस्पृश्य

भवन्ति" इत्येवं प्राप्ते संवत्सरे सकृदेव मधुपर्कार्हो भवतीत्युक्तमत्र वक्ष्यामः । तस्मात् कृतार्घ्योऽपि पुनर्विवाहे मधुपर्कार्हो भवत्येवेति वक्तव्य एव । नैमित्तिको ह्ययं मधुपर्कः । तस्मात् सर्वमेदं सूत्रं वक्तव्यमेव । कान्तानामिति वचनादन्यस्यापि कान्तस्यापि गृहेषु गतेषु तदर्हा मधुपर्कार्हा एव भवन्ति । विवाह इति वर्तमाने पुनर्विवाहग्रहणं सामीप्यार्थम् । विवाहसमीपे कृते च विवाहे कान्तानां मधुपर्को भवत्येवेति ॥ १० ॥

न त्वे······वाहम् ॥ अधियज्ञमधिविवाहं च[चा]मांसोऽर्घ्यो न त्वेव स्यात् ॥

कुरु······ब्रूयात् ॥ स्वयमपि कुरुतेत्येव ब्रूयात्, नोत्सृजतेति । उत्सृजतेत्युक्ते तमुत्सृज्यान्येनापि मांसेन कर्तुं शक्यते । तस्मादिदमुच्यते । या कर्मणि प्रकृता गौस्तामेव त्यजेदित्येवमर्थम् । प्रायशो विद्यमानस्यैव विकल्पेन प्रतिनिधिः "गोपशु-रजमन्यद्वा यत्सामान्यतमं मन्येत तत्तत्कुर्वीत" इति । तस्माद्यद्द्रव्यमजादि तत्तद्द्रव्यं भवति, तदेव दर्शयति । गौरित्युक्त्वा अर्थकर्म करोति, अत ऊर्ध्वं विरोधात् ॥ १२॥

बृह······कन्याम् ॥ अथास्मै "युवं वस्त्राणि" इति वाससी प्रयच्छति । तथा चोक्तम्—"ते वाससी बृहस्पतये त्वा इति मन्त्रेण प्रतिगृह्य परिधाय तत उपस्पृश्य 'कोऽदात् कस्मा अदात्' इत्यनेन मन्त्रेण कन्यां प्रतिगृह्णाति" इति । अस्मिन् हि काले दुहितृमत्यो यथाविहितं कन्यां प्रयच्छन्ति । उपस्पृश्य इति नायमाचमनविधिः; आचान्तस्यैवाचमनं वासःपरिधानानन्तरं प्रसिद्धम् । उक्तं च "वासः परिधाया-चामेत्" इति । तस्मादाचमनस्याविधेयत्वादुपस्पृश्य कन्यां प्रतिगृह्णातीति कन्या-प्रतिग्रहणाङ्गमुपस्पर्शनं विधीयते, पाणी प्रक्षाल्य प्रतिगृह्णीयादिति, यथोपस्पृश्य सर्वे इति । अथवा उपस्पृश्यालभ्य स्पृष्ट्वा कन्यां प्रतिगृह्णीयात् ॥ १३ ॥

१. IO. अविधि
२. A[1], A[2] and T omit मह्यं... प्रतिगृह्णते
३. L. अजातितद्द्रव्यं
४. L omits ते वाससी
५. L. प्रते वाससी इति

"कोऽदात् । कस्मा अदात्" इति कन्याम् ॥१३॥ "संराज्ञी श्वशुरे" इति पिता भ्राता वास्यंग्रेण[१] मूर्धनि जुहोति । स्रुवेणावतिष्ठन्नासीनायाः प्राङ्मुख्याः[२] प्रत्यङ्मुखः ॥१४॥ हुत्वान्वारब्धायां[३] महाव्याहृतिभिर्हुत्वा समस्ताभिः चतुर्थीं प्रतीयेततस्यां चोदनायामेवमनादेशे ॥१५॥ सर्वेष्वेव[४] तु भूतिकर्मसु

संरा……मुखः ॥ अथ कन्यायाः प्राङ्मुख्या आसीनायाः प्रत्यङ्मुखस्तिष्ठं-स्तस्याः पिता वा भ्राता वा मूर्धनि—"संराज्ञी श्वशुरे" इत्यनयर्चा अस्यग्रेण स्रुवेण वा जुहोति, प्रकृतेनाज्येन[५] जुहोतिचोदितत्वात् ॥ १४ ॥

अन्वा……ङ्गुष्ठम्[६] [नादेशे] ॥ व्यवधायकमिदं वाक्यम् । हुत्वा एहि सूनरी इति संबन्धः । हुत्वेत्यन्वारब्धायां महा[७]व्याहृतिभिः जुहोति, समस्ताभिः महाव्याहृतिभिश्चतुर्थी आहुतिः प्रतीयेत । एवमेतस्यां चोदनायामेवमेव समस्ताभिश्चतुर्थी प्रतीयेतानादेशे । अनादेश इति कर्मणि चोदिते प्रधानाहुतीष्वनादिष्टासु महाव्याहृतिभिर्जुहुयात् । चूळाकर्मण्यपराजितायां दिशि हुत्वेत्येवमादिषु च ॥ १५ ॥

सर्वे……हुयात्[८] ॥ तुशब्दः समुच्चयार्थः । सर्वेषु भूतिकर्मसु च प्रधानं स्यात् । पुरस्तादुपरिष्टाच्च एताभिश्चतुर्भिर्महाव्याहृतिभिः जुहुयात् । भूतिकर्माण्युक्तानि विवाहादीनि । सर्वग्रहणं सर्वमुख्यपरिग्रहणार्थम् । इतरथा मुख्यामुख्ययोः मुख्ये सम्प्रत्ययन्यायात् प्रतिश्रुतिहोमादीनां न भवति । षट्कर्माणि[९] विवाहे द्वे उपनयने तत्रैकं मुख्यम्, इतराण्यमुख्यानि । तस्मात् सर्वशब्दसामर्थ्यात् प्रतिश्रुतिहोमयोः गृहप्रवेदनीये[१०] चतुर्थीहोमे अक्षतधानाहोमे च प्रधानानां पुरस्तादुपरिष्टाच्च एताभिर्जुहुयात् आघारावाज्यभागौ हुत्वा । "अग्नये" इत्यत्र पुरस्ताद् व्याहृतयो न भवन्ति, अविधानादित्युक्तम् । एवकारग्रहणं हविर्नियमार्थम् । एताभिरेवाज्यहविर्भिः । एवं केशान्ते सीमन्तोन्नयने चतुर्थीहोमे च जुहुयादिति । इतरथा स्थालीपाके न होमः स्यात्, प्रधानत्वादावापस्थाने[११] विहितत्वात् । कथमावा-

१. IO, A¹ and A². स्याग्रेण
२. A¹ and IO. प्राङ्मुखाः
३. All except omit T हुत्वा
४. IO and A¹. सर्वेष्वाहुतिकर्मसु
५. L. कृतेन
६. A seems to have read the sūtra up to अङ्गुष्ठम्
७. L omits महा
८. L reads up to तिष्ठन् and omits the sūtras later.
९. L adds इति
१०. L. प्रपादनीये
११. L. त्वा भाववस्थाने

पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् ॥१६॥ "एहि सूनरी" इत्युत्थाप्य "गृभ्णामि ते सौभगत्वाय हस्तम्" इत्युत्तानेन दक्षिणेन पाणिनोत्तानं दक्षिणं पाणिं गृह्णाति साङ्गुष्ठं प्राङ्मुख्याः प्रत्यङ्मुखस्तिष्ठन् ॥१७॥ पश्च चोत्तरा जपति "अमोहमस्मि सा त्वम् सा त्वमस्यमोहम् द्यौरहम् पृथिवी त्वम् सामाहम् ऋक्त्वम् तावेव विवहावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टयः" इति ॥१८॥ उदकुम्भं नवम् "भूर्भुवः स्वः" इति पूरयित्वा पुंनामस्य वृक्षस्य सक्षीरान् पलाशान् सकुशानोप्य हिरण्यं

प्रधाने विधानमिति चेत्, प्रधानप्रकरणे विधानात्; प्रधानस्य पुरस्तादुपरिष्टाच्च भवन्ति, न कृत्स्नस्य कर्मणः ॥ १६ ॥

एहि......तिष्ठन् ॥ इह प्रकृतितस्तिस्रो होमा व्याहृतिभिर्हुत्वा। ततः पुरस्तादिति विहिताश्चतस्रो हुत्वा। पुनरन्वारब्धायामिति विहिताश्चतस्रो हुत्वा। अथोत्थाप्य "एहि सूनरी" इति कन्यामुत्थाप्य प्राङ्मुख्याः तिष्ठन्त्याः प्रत्यङ्मुखस्तिष्ठन्नुत्तानेनात्मनो दक्षिणेन पाणिना उत्तानं दक्षिणं पाणिं साङ्गुष्ठं गृह्णातीत्यर्थः[ह्णाति] "गृभ्णामि ते सौभगत्वाय हस्तम्" इत्यनयर्चा । दक्षिणेनेति दिग्लक्षणमेनबन्तं पदमात्मनो दक्षिणपाणिं कृत्वा गृह्णाति । उदग्राङ्गुलिनापाणिमुत्तानेन गृह्णातीत्यर्थः ॥ १७ ॥

पश्च......इति ॥ तस्या ऋच उत्तराः "तां पूषन्" इत्यारभ्य पश्च जपति। चशब्द उत्तरार्थः । "अमोहमस्मि" इति च मन्त्रं जपति ॥ १८ ॥

उद......केषाम् ॥ "जरदष्टयः" इत्येवमन्तं मन्त्रं जपित्वा ततः कुम्भं नवम् "भूर्भुवस्स्वः" इति पूरयित्वा उदकेन पुन्नामस्य पुँल्लिङ्गनामधेयस्य क्षीरिणो न्यग्रोधादेर्वृक्षस्य सक्षीरान्पलाशान् पर्णानित्यर्थः। सकुशान् कुशैः सह तस्मिन्नुदकुम्भे ओप्य। हिरण्यं चेत्येके आचार्याः । तमुदकुम्भं ब्रह्मचारिणे वाग्यताय प्रदाय प्रागुदीच्यां दिशि ता आपः स्थेया भवन्ति । प्रदक्षिणाश्च भवन्ति । परिणयनकाले प्रद-

१. IO omits सा त्वं
२. A² reads द्यौरहं पृथिवी त्वं after ऋक्त्वं
३. T. उदकुम्भभवं
४. All except T. नाम्नोऽस्य
५. T. पालाशान्
६. A omits उत्थाप्य
७. L omits गृह्णातीत्यर्थः
८. A adds पश्च.. पति । तस्याः
९. A. पालाशान्
१०. L omits दिशि...अग्निर्दक्षि

चेत्येके । तं ब्रह्मचारिणे वाग्यताय प्रदाय प्रागुदीच्यां दिशि ताः स्थेयाः प्रदक्षिणा भवन्ति । दक्षिणत एकेषाम् ॥१९॥ अश्मानं चोत्तरत उपस्थाप्य "एहि सूनरी" इत्युक्त्वा "एह्यश्मानमातिष्ठ । अश्मेव त्वं स्थिरा भव । अभितिष्ठ पृतन्यतः । सहस्व पृतनायतः" इति दक्षिणेनास्याः प्रपदेनाश्मानमाक्रमय्य "विश्वा उत त्वया वयम्" इति प्रदक्षिणमग्निं पर्याणीय तेनैव मन्त्रेण द्वितीयं वसनं प्रदाय॥२०॥लाजान् शमीपालमिश्रान् पिता भ्राता वा अस्या अञ्जलावावपति ॥ २१॥ उपस्तरणाभिघारणे प्रत्यभिघारणं च लाजेषु ॥२२॥ तान् जुहोति

"इयं नार्युपब्रूते लाजानावपन्तिका ।
शिवा ज्ञातिभ्यो भूयासं चिरं जीवतु मे पतिः । स्वाहा"

क्षिणाः कार्या इत्यर्थः । अग्नेर्दक्षिणतः स्थेया एकेषामाचार्याणाम् । ब्रह्मचारी प्रागुदीच्यां दिशि चेत् प्रत्यङ्मुखस्तिष्ठेत् । दक्षिणतश्चेत् उदङ्मुखस्तिष्ठेत्, प्राङ्न्यायत्वात् । कर्माभिमुख्यं हि बलवत् ॥ १९ ॥

अश्मा......दाय ॥ अग्नेरुत्तरतः आत्मानं चोपस्थाप्य "एहि सूनरी" इति कन्यामुक्त्वा "एह्यश्मानम्" इत्यनेन मन्त्रेणास्या दक्षिणेन प्रपदेन अश्मानमाक्रमय्य "विश्वा उत त्वया वयम्" इत्यनयर्चा प्रदक्षिणमग्निं कन्यां पर्याणीय तेनैव पूर्वप्रकृतेन मन्त्रेण "रैभ्यासीत्" इत्यनेन द्वितीयं वसनमस्यै प्रदाय ॥ २० ॥

लाजान्......पति ॥ लाजान् शमीपलाशमिश्रान् शमीपर्णमिश्रान् पिता भ्राता वा अस्या अञ्जलावावपति । इहार्थादाकोशाञ्जलिर्भवति ॥ २१ ॥

उँप......जेषु ॥ उपस्तरणाभिघारणाद्यपि लाजेषु भवति । उपस्तरणमित्युच्यमाने पिता भ्राता वा तदपि करोति, अधिकारात् । तस्मादधिकारनिवृत्त्यर्थं द्वितीयं लाजग्रहणम् । अस्थालीपाकप्रकृतित्वादुपस्तरणादिविधानम् ॥ २२ ॥

तान्......जुहोति ॥ तान् लाजान् जुहोति—"इयं नार्युपब्रूते" इत्यनेन मन्त्रेण । सा तिष्ठन्ती जुहोतीत्येतावता सिद्धे तान् जुहोति, तिष्ठन्ती जुहोतीति द्विर्होमचोदना द्वयोर्विधानार्थम् । द्वावपि लाजान् जुहुतः । तस्या अञ्जलिं पतिरन्वारभ्य हावयेदित्यर्थः । यद्येवं हावयेदिति वक्तव्यम् । नैतदस्ति । न हि तदा होम

१. T. उक्ता
२. L omits तिष्ठेत्
३. L omits sūtra.
४. L omits sūtra.
५. L. अपरन्वारभ्य

इति तिष्ठन्ती जुहोति ॥२३॥ पतिर्मन्त्रं जपति ॥२४॥ अश्माक्रमणादेवं द्वितीयमेवं तृतीयं तूष्णीं कामेनं चतुर्थम् ॥२५॥ "प्रजापते न त्वदेतानि" इति प्राजापत्यं हुत्वा "यत्पाकत्रा" इति स्विष्टकृतं च सर्वत्र ॥२६॥ "अग्नये स्विष्टकृते स्वाहा" इति वा ॥२७॥ उदङ् सप्तपदानि प्रक्रमयेत्। "इष

कर्मणि द्वावपि प्राधान्येन कर्तारौ भवतः। तस्माद् यथोक्तमेव ज्यायः। स्वाहाकारः किमर्थः? "चिरं जीवतु मे पतिः" इत्युक्तेऽपि "स्वाहाकारोऽन्ते होममन्त्राणाम्" इत्येवान्ते स्वाहाकारो भवति। "मे पतिः" इत्युच्यमाने एतावति स्वाहाकारः कन्यया कर्तव्यस्स्यात्। सा हि जुहोति ॥ २३ ॥

पति......पति ॥ गृह्याम्नातमेव मन्त्रं पतिर्जपति। स्वाहाकारे पुनर्मन्त्र आम्नाते तेन सह पतिर्जपति। तस्मात् स्वाहाकारान्तो मन्त्रः सम्प्रैषादिर्भवति। अश्माक्रमणार्थो हि सः। ननु तेनैव मन्त्रेण द्वितीयं वसनं प्रदायेत्यपि भवति। तत्र द्वितीयवसनस्यैतद्धि प्रयोजनम्। तेनैव मन्त्रेण वसनं प्रदाय इत्येतावता सिद्धे द्वितीयमिति नियमार्थम्। द्वितीयमेव वसनं प्रयच्छति, न तृतीयादीति ॥ २४ ॥

अश्मा......तुर्थम् ॥ कामेन चतुर्थं होमकर्म करोति। कामेनेति शूर्पस्य दक्षिणपुटेनेत्यर्थः। तद्धि तस्य नामान्तरम्। तूष्णीं इति होममन्त्रनिवृत्त्यर्थम्। एवमित्यनुक्तत्वादश्माक्रमणं पर्याणयनं च भवतः। यद्येताविष्टौ भविष्येताम्, य एवं चतुर्थं तूष्णीं कामेनेत्यवक्ष्यत् ॥ २५ ॥

प्रजा......र्वत्र ॥ "प्रजापते न त्वत्" इत्यनयर्चा प्राजापत्यं हुत्वा। "प्रजापते न त्वत्" इति हुत्वेत्येतावता सिद्धे प्राजापत्यवचनमन्यत्रापि प्राजापत्यमित्युक्ते ऋचा होतव्यम्, न "अमुष्यै स्वाहा" इति शुद्धेनेति ज्ञापनार्थम्। तस्मान्मनसा प्राजापत्यमित्यत्रापि ऋचा होतव्यम्। इहोपरिष्टाद्याहुतीश्चतस्रो हुत्वा "यत्पाकत्रा" इत्यनयर्चा स्विष्टकृतं जुहोति, सर्वत्रवचनात्, नेहैव ॥ २६ ॥

अग्न......ति वा ॥ "अग्नये स्विष्टकृते स्वाहा" इति वा सर्वत्र स्विष्टकृतं जुहोति ॥ २७ ॥

उद......जति ॥ "इष एकपदी" इत्येवमादिभिः सप्तभिर्मन्त्रैरुदङ् सप्तपदानि प्रक्रमयेत्। आक्रम्य प्रक्रमयेत् इत्येवमादौ हेतुकर्तृनिर्देशे स्वयमारभ्य कारयत्।

१. IO and A[1] कामे
२. T omits एतानि
३. A. दक्षिणमुखे पुटेन
४. A. कृत्वेत्ये-

एकपदी । ऊर्जे द्विपदी । रायस्पोषाय त्रिपदी । मायो भव्याय चतुष्पदी । प्रजाभ्यः पञ्चपदी । ऋतुभ्यः षट्पदी । सखा सप्तपदी भव" इति । "विष्णुस्त्वा नयतु" इति सर्वत्रानुषजति ॥२८॥ आपोहिष्ठीयाभिस्तिसृभिः स्थेयाभिरद्भिर्मार्जयित्वा मूर्धन्यवसिच्य ब्राह्मणेभ्यः किंचिद् दद्यात् ॥२९॥ सर्वत्र स्थालीपाकादिषु कर्मसु ॥३०॥ अचार्याय वरं ददातीत्याह ॥३१॥

वाक्यरूपेण सप्तानां प्रक्रमाणां सप्त मन्त्रा इति विज्ञायते, इतिकरणात्तेषाम् । तर्हि निर्देशे "विष्णुस्त्वा नयतु" इति सर्वेषु मन्त्रेषु अनुषजति । 'इष एकपदी विष्णुस्त्वा नयतु' इत्येवम । सप्तमे तु "सखा सप्तपदी भव विष्णुस्त्वा नयतु" इति भवशब्दोऽधिको वचनात् स्यात् । अथवा यथा राज्ञे प्रत्यानीयेत्यत्र राज्ञे प्रत्यानीयेत्यज्ञानवते इति शब्ददोषः, एवमिहाप्यज्ञानपठितः स्यात् । "सखा सप्तपदी" इति । तथा सति सर्वत्र भवेति विष्णुस्त्वानयत्वित्यनुषङ्गः स्यात् "इष एकपदी भव विष्णुस्त्वानयतु" इति । एवं च सर्वेषां मन्त्राणां रूपसादृश्यं भवतीति । अथ मतम्— इषे ऊर्जे रायस्पोषाय मायो भव्याय प्रजाभ्य ऋतुभ्य इति षण्णां चतुर्थ्या पदानि । सप्तमे तु स वा[सखा] इति प्रथमान्तम् । यथा च विभक्तिवैरूप्यम्, एवं मन्त्राणां भवशब्दवैरूप्यमपि सप्तमे भवतीति शब्दस्थान एव परिपठित इति । यथा वा उपपन्नतरमर्थं मन्यते स गृहीतव्यः ॥ २८ ॥

आपो......दद्यात् ॥ "आपो हि ष्ठा" इति जपित्वा । विशेषितत्वान्मार्जनमुभयोः करोति सहैव । तदुक्तं शौनकेन—"उभयोः सन्निधाय शिरसी उपपात्रेणावसिच्य" इति । तथैव मूर्धन्यवसिच्य ब्राह्मणेभ्यः किञ्चिद्दद्याद् यथाशक्ति ॥२९॥

सर्व......र्मसु ॥ ब्राह्मणेभ्यः किञ्चिद्दद्यात् सर्वत्र स्थालीपाकादिषु कर्मसु । स्थालीपाकादीति विधानादाज्याहुतिषु च किञ्चिद्दातव्यमेवेति ॥ ३० ॥

आचा......त्याह ॥ आचार्याय वरं ददातीत्याह । आचार्यः किं करोतीति

१. T omits this word.
२. T. Space is left out for writing आपो...भिः
A[1] adds ब्राह्मो before आपो
३. T omits वरं...सूर्या
४. L. त्वानेनयतु
५. L. नीये ज्ञानपठितः इति
६. L omits ऋतुभ्यः
७. L. वैरूप्ये

सूर्यां विदुषे वा धूयम् ॥३२॥ गौर्ब्राह्मणस्य वरः ॥३३॥ ग्रामो राजन्यस्य ॥३४॥ अश्वो वैश्यस्य ॥३५॥ अधिरथं शतं दुहितृमते ॥३६॥ ज्ञेभ्योऽश्वं ददाति ॥३७॥

चेत्, साध्यम्। आह मन्त्रमेवाह[2]। न हि दानचोदनास्ति[3] वरं दद्यामिति। नैष दोषः। आचार्यायेति सम्प्रदानलक्षणा चतुर्थी देयं दर्शयति। मन्त्रलिङ्गं च—"गौर्ब्राह्मणस्य" इत्येवं देयनिर्देशश्च। दानाभावे हि[4] देयनिर्देशोऽनर्थकः स्यात्; किन्तु आचार्याय मन्त्रमुक्त्वा ददाति ॥ ३१ ॥

सूर्या......धूयम् ॥ सूर्यां यो ब्राह्मणो वेद तस्मै वाधूयं वधूवस्त्रं दद्यात्। सूर्येति सूर्यादृष्टो मन्त्रगण उच्यते। तस्य किञ्चिद्‌ज्ञानादपि तद् भवति। न हि विद्वत्ताया इयत्तास्ति। पूर्वदत्तं वासो ददाति। वासो वसनमिति शब्दभेदात् ॥३२॥

गौर्ब्राह्म......वरः ॥ वर इत्युक्ते ब्राह्मणस्य। गौर्भवति ब्राह्मणस्येति ब्राह्मणेन दातव्य इत्यर्थः ॥ ३३ ॥

ग्रामो राजन्यस्य ॥ राजन्येन ग्रामो दातव्यः ॥ ३४ ॥

अश्वो वैश्यस्य ॥ अश्वो[6] वैश्येनाचार्याय। वरमित्यत्रैतद्वक्तव्यम्। अथवा सर्वदानप्रकरणं परिसमाप्य। मध्ये वचनमिह दानपरिसमाप्तिप्रदर्शनार्थम्। ब्राह्मणेभ्य आचार्याय सूर्याविदे च नित्यं दानं वक्ष्यमाणमनित्यमिति[5] ॥ ३५ ॥

अधि......मते ॥ अधिरथं शतमेकरथं गवां च[7] शतं दुहितृमते दद्यात्। सङ्ख्यावचने प्रसिद्धगौरित्युक्तं पुरस्तात् ॥ ३६ ॥

ज्ञेभ्यो......ददाति ॥ विद्वद्‌भ्योऽश्वं ददाति। भागाधिकारे पुनर्दानवचनमेकमेवाश्वं सर्वेभ्यो विद्वद्‌भ्यो ददाति, न प्रत्येकमित्येवमर्थम् ॥ ३७ ॥

१. A[1] यूयं
२. L omits मन्त्रमेवाह
३. A. नास्तिरेन्दद्यादि
४. L omits हि
५. A omits this sentence
६. A omits अश्वो...परिसमाप्य
७. A omits च

## अथ नवमः खण्डः

"प्र त्वा मुञ्चामि" इति तिसृभिः गृहान् प्रतिष्ठमानायाम् ॥१॥ "जीवां रुदन्ति" इति रुदत्याम् ॥२॥ अथ रथाक्षस्योपाञ्जनं पत्नी कुरुते "अभिव्ययस्व खदिरस्य सारम्" इत्येतया सर्पिषा ॥३॥ "शुची ते चक्रे" "द्वे ते चक्रे" इति

## अथ नवमः खण्डः

प्र त्वा .....नायाम् ॥ "प्र त्वा मुञ्चामि" इति तिसृभिः ऋग्भिः अनुमन्त्रयते गृहान् प्रतिष्ठमानायां कन्यायाम्। अत्र एभिः ऋग्भिरनुमन्त्रयत इत्यध्याहारः। कुत उपलभ्यते? कस्मात्पुनस्तिसृभिः जुहोति इत्यध्याहारो न भवति! अत्रोच्यते—तिसृभिः इत्यृचां करणत्वेन निर्देशो दृष्टः। प्रतिष्ठमानायामिति काललक्षणार्था सप्तमी। न च कर्म विहितमस्ति प्रत्यक्षम्, यस्यैताः करणानि भवन्ति। तच्च कर्म-करणनिर्देशेन लिङ्गेनाध्याह्रियते। अभिमन्त्रयत इति वा। तथा सति करणनिर्देशश्च कृतार्थो भवति। अत्र दृष्टानामेवर्चां प्रयोगो भवति। जुहोत्यध्याहारे त्वत्यन्तमदृष्ट-कल्पना स्यात्; दृष्टक्लृप्तिर्हि गरीयस्यविशेषे। तस्माज्जुहोत्यध्याहारो न भवति। उत्तराभिमन्त्रदर्शनाच्च अभिमन्त्र्यम् ॥ १ ॥

जीवां......दत्याम् ॥ प्रस्थानकाले तन्निमित्तं प्ररुदत्याम् "जीवां रुदन्ति" इत्यनुमन्त्रयते ॥ २ ॥

अथ......र्पिषा ॥ अथेत्यधिकारनिवृत्त्यर्थमुक्तम्, अन्यत्र कर्तृत्वात्। अथ रथाक्षस्योपाञ्जनं पत्नी कुरुते सर्पिषा—"अभिव्ययस्व" इत्यनयर्चा। "अभिव्ययस्व खदिरस्य सारम्" इति। सर्पिषा इत्येतावता सिद्धे एतयेति नियमार्थम्। तयो-रक्षशिरसोरुपाञ्जनमेतया सकृदुक्त्यैव कुरुत इति ॥ ३ ॥

शुची......क्रयोः ॥ "शुची ते चक्रे" "द्वे ते चक्रे" इत्येताभ्यां चक्रयोरुपा-ञ्जनं पत्नी कुरुते सर्पिषा ॥ ४ ॥

१. IO omits इति
२. A². प्ररुदत्यां
३. A adds तस्यात्म
४. L. सिद्धयर्थं
५. A. उपार्जनं

चक्रयोः ॥४॥ पूर्वया पूर्वमुत्तरयोत्तरम् ॥५॥ उस्रौ च ॥६॥ "खे रथस्य" इत्येतया फलवतो वृक्षस्य शम्याकर्तेष्वेकैकां वयां निधाय नित्यावभिमन्त्र्य अथोस्रौ युञ्जन्ति "युक्तस्ते अस्तु दक्षिणः" इति द्वाभ्याम् ॥७॥ "शुक्रावनड्वाहौ" इत्येतेनार्धर्चेन युक्तावभिमन्त्र्य "सुकिं शुकम्" इति रथमारोहन्त्याम् ॥८॥

पूर्व......त्तरम् ॥ "शुची ते चक्रे" इत्यनयर्चा पूर्वं चक्रमुपानक्ति। उत्तरया "द्वे ते चक्रे" इत्यनया उत्तरं चक्रमुपानक्ति। यत्पूर्वमक्षेण युज्यते चक्रं तत् पूर्वमित्युच्यते। इतरदुत्तरम्। किमर्थमिदमुच्यते? ननु चोक्तं पुरस्तात् समानसङ्ख्यानां सङ्ख्याक्रमेण क्रमो भवति। इह मन्त्रलिङ्गेन चक्रद्वित्वेनोभाभ्यामुभयाभिधानं प्राप्तम्। तथा प्राप्त इदमुच्यते; पूर्वया पूर्वमुत्तरयोत्तरमिति। एवं सति लिङ्गाद्वचनस्य बलीयस्त्वाद्यथोक्तं भवतः ॥ ५ ॥

उस्रौ च ॥ उस्रयोश्च वक्ष्यमाणयोः "युक्तस्ते अस्तु दक्षिणः" इति द्वयोः पूर्वया पूर्वं मन्त्रं[पूर्वमुस्रं] युञ्जन्ति, उत्तरया चोत्तरम्। उक्तावेव चोद्यपरिहारौ ॥ ६ ॥

खे र......द्वाभ्याम् ॥ पत्न्यधिकारो निवृत्तः। वयामिति शाखामित्यर्थः। फलवतो वृक्षस्य चतस्रः शाखा आदाय युगस्य शम्यागर्तेषु "खे रथस्य" इत्येतया एकैकामेकैकस्मिन्निखाय। एतयेत्यस्योक्तावेव चोद्यपरिहारौ। नित्या एवं शम्या अभिमन्त्र्या। निधायाथोस्रौ युञ्जन्ति "युक्तस्ते" इति द्वाभ्यामृग्भ्याम्। उक्तः प्रयोगः ॥ ७ ॥

शुक्रा......हन्त्याम् ॥ "शुक्रौ" इत्यनेनार्धर्चेन युक्तावुस्रावभिमन्त्र्य। एतेनेत्यस्योक्तावेव चोद्यपरिहारौ। "सुकिं शुकम्" इति रथमारोहन्त्यामभिमन्त्रयेत ॥ ८ ॥

१. T. मुखौ च
२. T. यवां
३. A². निखाय
४. T omits अथ
५. IO adds अथोस्रौ युञ्जन्ति
६. A omits उत्तरया...उपानक्ति
७. A omits इतरत्...उच्यते
८. L. युञ्जति
९. L omits एकैकां
१०. A. हि

विवाहे कन्यायाः पुरुषाणे कर्तव्यानि



अग्निष्ठस्त्वग्रतो गच्छेत् ॥९॥ "मा विदन् परिपन्थिनः" इति चतुष्पथे ॥ १०॥ "ये वध्वः" इति श्मशाने ॥११॥ "वनस्पते शतवल्शः" इति वनस्पतावर्धर्चं जपति ॥१२॥ अथ यदि रथाङ्गं विशीर्येत छिद्येत वा आहिताग्नेर्गृहं कन्यां प्रवेश्य "य ऋते" इत्येतया संदध्यात् । "त्वं चिदश्वम्" इति ग्रन्थिम् "स्वस्ति नो मिमीताम्" इति पञ्चर्चं जपति॥१३॥ "सुत्रामाणम्" इति नावमारोहन्त्याम् ॥१४॥ "अश्मन्वतीः" इति नदीं तरन्त्याम् ॥१५॥ यदि वा

अग्नि......गच्छेत् ॥ यस्मिन्नग्निस्तिष्ठति स भवत्यग्निष्ठः, अग्निष्ठस्तु रथाग्रतो गच्छेत् ॥ ९ ॥

मा वि......ष्पथे ॥ चतुष्पथे "मा विदन्" इति जपति । जपति इत्युत्तरत्र वक्ष्यते । इह सिंहावलोकितन्यायेन भवति ॥ १० ॥

ये व......शाने ॥ श्मशाने "ये वध्वः" इति जपति ॥ ११ ॥

वन......पति ॥ वनस्पतिसमीपे "वनस्पते" इत्यर्धर्चं जपति ॥ १२ ॥

अथ......पति ॥ अथ रथाङ्गं विशीर्येत यदि, छिद्येत वा ; विशीर्येतेति दार्वभिप्रायेणोक्तम् ; छिद्येतेति रज्ज्वभिप्रायेण ; आहिताग्नेः गृहं कन्यां प्रवेश्य यदि सम्भवे ; असम्भवे च वृत्तविशिष्टस्य अन्यस्य गृहं शुद्धं वा रक्षासंयुक्तं प्रवेश्य "य ऋते" इत्येतया सन्दध्यात् । अन्येन सन्धीयमाने हि "य ऋते" इति ब्रूयादेवेति नियमार्थमेतयेत्युक्तम् । दारुकृतस्याङ्गस्य सन्धानमुक्तम् । रज्जुकृतस्य "त्वञ्चिदश्वम्" इति ग्रन्थिं कुर्यात् । उभयोः "स्वस्ति नो मिमीताम्" पञ्चर्चं जपति ॥ १३ ॥

सुत्रा......हन्त्याम् ॥ कन्यायां नावमारोहन्त्याम् "सुत्रामाणम्" इति जपति ॥

अश्म..... रन्त्याम् ॥ नदीं तरन्त्याम् "अश्मन्वतीः" इति जपेत् ॥ १५ ॥

यदि......णं च ॥ युक्तेनैव रथेन यदि तरेत् "उद्व ऊर्मिः" इत्यगाधप्रेक्षणं कारयेत् । चशब्दः समुच्चयार्थः । "अश्मन्वतीः" इति जपे सति "सुत्रामाणम्"

१. IO. अग्निषु स त्व
२. IO adds विरोह
३. A¹ and IO add अन्यतमत्
४. T. यजत इत्येतया
५. IO. प्रदक्षिणग्रन्थिं
६. IO adds ईयते
७. L omits चतुष्पथे
८. L adds मा विदन्
९. A. भवन्ति
१०. L omits this word

युक्तेनैव "उद्व ऊर्मिः" इत्यगाधे प्रेक्षणं च ॥१६॥ "इह प्रियं प्रजया ते समृद्ध्यताम्" इति सप्त गृहान् प्राप्तायाम् ॥१७॥ कृताः परिहाप्य ॥१८॥

## अथ दशमः खण्डः

गृहान् प्रपद्य पश्चादग्नेरानडुहे चर्मण्युपविश्य दर्भेष्वन्वारब्धायां पतिश्चतस्रो जुहोति "अग्निना देवेन पृथिवीलोकेन लोकानामृग्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा", "वायुना देवेनान्तरिक्षेण लोकेन लोकानां यजुर्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा", "सूर्येण देवेन दिवो लोकेन लोकानां सामवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा", "चन्द्रेण देवेन दिशां लोकेन लोकानां ब्रह्मवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा" इति ॥१॥

इत्यर्थलोपान्निवर्तते। एवं व्रत[प्र]स्थानाभावे सर्वं निवर्तते। सति प्रस्थाने प्ररोदनादीन्यावर्तन्ते। असति तद्वाचको मन्त्रो निवर्तते। तदुक्तम्—"अर्थलोपादस्य कर्म स्यात्" इति ॥ १६ ॥

इह......प्तायाम् ॥ कन्यायां गृहान् प्राप्तायाम्—"इह प्रियम्" इति सप्त जपेत्। प्राप्तायामिति गृहेषु समीपेष्वित्यर्थः ॥ १७ ॥

कृताः परिहाप्य ॥ पुरस्तात्कृताः परिहाप्य अन्याः "नीललोहितम्" इति "ये वध्वः" इति "मा विदन् परिपन्थिनः" इति "गृभ्णामि ते" इति षट्कृता एताः परिहाप्य उद्धृत्येत्यर्थः। "इहैव स्तम्" इत्येवमन्ताः सप्त जपतीत्यर्थः॥ १८ ॥

## अथ दशमः खण्डः

गृहान्......हेति ॥ गृहान् प्रपद्याग्निमुपसमाधाय तस्य पश्चादग्नेरानडुहे चर्मण्युपविश्य दर्भेषु वोपविश्य अन्वारब्धायां कन्यायां पतिश्चतस्र आहुतीः जुहोति। केवलं कन्यासंस्कारार्थत्वाद्धोमस्याचार्यो जुहुयादिति मत्वा नियमार्थं पतिरित्युक्तम्, पतिरेव जुहुयात्, नान्य इति। अथवा "प्र त्वा मुञ्चामि" इत्यारभ्य यदुक्तं होमात् प्राक् तदाचार्यो वा कुर्यादित्यर्थः। तस्यानियमार्थमिह वचनं पतिरेव जुहुयात्, प्राक्तनस्यानियम इति। अन्वारम्भकालावधारणार्थं चतस्र इत्यु-

१. A[2] and T omit प्रजया ते समृध्यतां

२. IO, A[1] and A[2] उपवेश्य

३. All except A[2] omit इति

विवाहे गृहान्प्रपद्य होमः



"भूर्या ते पतिघ्न्यलक्ष्मी देवरघ्नी जारघ्नी तां करोमि तेऽसौ" इति वा ॥२॥ द्वितीयया महाव्याहृत्या द्वितीया उपहिता ॥३॥ तृतीयया तृतीया ॥४॥ समस्ताभिः चतुर्थी ॥५॥ "अघोरचक्षुः" इत्याज्यलेपेन चक्षुषी विमृज्य "कया नश्चित्र आभुवत्" इति तिसृभिः केशान्तानभिमृश्य "उत त्या दैव्या

कम्। तत एतास्वेव चतसृष्वन्वारभते। भूतिकर्मत्वात् प्राप्तासु व्याहृतीष्वपनीयन्ते। स्वाहाकारान्ताश्चत्वारो मन्त्राः; तैर्जुहुयात्। असावित्यत्र सम्बुद्ध्या तस्या नाम निर्दिशेत् ॥ १ ॥

भूर्या... ..ति वा ॥ "या ते पतिघ्नी" इति मन्त्रः प्रथमया महाव्याहृत्योपहित आम्नातः "भूर्याते पतिघ्नी" इति। तेन स्वाहाकारान्तेन होतव्या प्रथमाहुतिः ॥ २ ॥

द्विती......हिता ॥ एवमेव द्वितीयया महाव्याहृत्योपहिता द्वितीयाहुतिः "भुवो या ते पतिघ्नी" इति। द्वितीयोपहितेत्याहुतिरिति मन्त्र उच्यते, सम्बन्धात् ॥

तृती......तीया ॥ महाव्याहृत्येत्यधिकारः। तृतीयया महाव्याहृत्या तृतीयोपहिता स्यात्, "स्वर्याते पतिघ्नी" इति ॥ ४ ॥

सम......चतुर्थी ॥ सर्वाभिर्महाव्याहृतिभिश्चतुर्थ्युपहिता स्यात् "भूर्भुवस्वर्याते पतिघ्नी" इति। एवं वा। चतस्र आज्याहुतीर्जुहुयात्। प्रधानार्थत्वाविशेषात् तास्वप्यन्वारम्भः प्रसज्यते ॥ ५ ॥

अघो......स्रावम् ॥ प्रधानानन्तरं स्रुवगतेनाज्यलेपेनानयर्चास्याश्चक्षुषी विमृज्य तिसृभिः ऋग्भिः केशान्तानभिमृश्य एताश्चतस्रो जपित्वा प्रागाहुतिसंस्रावं हुत्वा अन्यस्मिन् पात्रे पूर्वमेव स्रुवादपस्रावितं तस्यां मूर्धन्यासिञ्चेत्। नन्वयं होमः तस्याः प्रस्थानभावे निवर्तेत। "प्र त्वा मुञ्चामि" इत्येवमादिवन्न होमो निवर्तते। नित्यो हि होमो विवाहशेषभूतः। तस्याः संस्कारार्थो नियतदेशकाल आम्नातः, न नैमित्तिकः। न हि गृहप्रपदनं तस्य निमित्तम्, तस्यासंस्कारार्थत्वाद्धोमस्य। तस्माद् गृहप्रपदनाभावेऽपि तस्मिन्नेव काले तत्रैव कर्तव्यम्। तत्रैतत्स्यात् काला-

१. T omits महा
२. L. नार्थत्वाद् विशेषत्वात्
३. A. अवस्रावितकस्यां
४. L. होनन्नहोमे निवर्तते
५. L omits प्र त्वा...निवर्तते
६. A. कस्मिन्

भिषजा" इति चतस्रो जपित्वा मूर्धनि संस्रावम् ॥६॥ अत्र हैके कुमारमुत्सङ्ग-मानयन्त्युभयतः सुजातम् "आते योनिम्" इत्येतयर्चा ॥७॥ अपिवा तूष्णी-मेव ॥८॥ तस्याञ्जलौ फलानि दत्वा पुण्याहं वाचयति ॥९॥ "पुंसुवती ह भव" इति ॥१०॥ वाचंयमावास्तामा ध्रुवस्य दर्शनात् ॥११॥ नक्षत्रेषु

न्तरेऽपि गृहान् प्रपद्य कर्तव्यम्, देशनियमानुग्रहार्थमिति; तन्न; तथा हि नैमि-त्तिक एव स्यात्। "नित्यो होमः" इति चोक्तम्। यदुक्तम् देशनियमानुग्रहार्थ-मिति, न ह्यवश्यनियतो देशः, अन्वाचयशिष्टत्वात्; यदि विवाहानन्तरं स्वगृहं कन्यां प्रपादयेत्, तदा गृहान् प्रपद्य जुहुयादिति चोक्तम्। "प्र त्वा मुञ्चामि" इत्येवमादिवदिति नैमितिकानि तानि हि[1] कर्माणि; सलिङ्गाश्च मन्त्राः; तस्मात्तेषां निवृत्तिर्निमित्ताभावे ॥ ६ ॥

अत्र......यर्चा ॥ अत्र होमानन्तरमेके कुमारमुभयतो मातृतः पितृतश्च सुजातं तस्या उत्सङ्गे आनयन्ति—"आ ते योनिम्" इत्येतयर्चा। "आ ते योनिम्" इत्यारभ्य मन्त्रगणमेकस्मिन् कर्मणि सह विधास्यति, तथेहापि स्यादिति मत्वैतय-र्चेति नियमार्थमुक्तम्। एतयैवर्चा न मन्त्रगणेन वक्ष्यमाणेनेत्यर्थः। ऋग्ग्रहणं च संशयनिवर्तनार्थम् ॥ ७ ॥

अपि......मेव ॥ अपिवाशब्दो विकल्पार्थः। तूष्णीमेव वा ॥ ८ ॥

तस्या..... यति ॥ पुण्याहवा[2]चनं प्रसिद्धमिह गृह्यते विहितं शास्त्रान्तरे ॥ ९ ॥

पुंसु......इति ॥ [3]हेति निपातोऽवधारणार्थः। कुमारोत्सङ्गानयनस्य वैकल्पि-कस्यापि सद्भावपक्षस्य स्तुत्यर्थोऽयमनुवादः। तस्मिन् कृते पुंसुवत्येवेयं नियोगतो भवतीति ॥ १० ॥

वाचं..... दर्शनात् ॥ तत उभौ वाचंयमावास्तां [4]आ ध्रुवस्य दर्शनात् ॥ ११ ॥

नक्ष......यति ॥ नक्षत्रेषु दृश्यमानेषु तां ध्रुवं दर्शयति[5] ॥ १२ ॥

१. A omits हि
२. A. वचनाप्र
३. L adds ह भवति
४. A omits आ
५. A omits ध्रुवं दर्शयति

दृश्यमानेषु ध्रुवं दर्शयति॥१२॥"ध्रुवैधि पोष्या मयि" इति "ध्रुवं पश्यामि"इति "ध्रुवां विन्देय" इति ब्रूयात् ॥१३॥ "दधिक्राव्णो अकारिषम्" इति दध्योदनं सह भुञ्जीयाताम् "पिबतं च तृप्णुतं च" इति तृचेन च ॥१४॥ त्रिरात्रमधः-शायिनावक्षारालवणाशिनौ स्याताम् ॥१५॥ एवमेवाध्वनि ॥१६॥ न सह भुञ्जीत ॥१७॥ संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रम् ॥१८॥

ध्रुवै......ब्रूयात् ॥ तत एतं मन्त्रं ब्रूयाद् ध्रुवं दृष्ट्वा ॥ १३ ॥

दधि......न च ॥ ततः "दधिक्राव्णो अकारिषम्" इत्येतया "पिबतं च" इति तृचेन दध्योदनं सम्भुञ्जीयातां सहेत्यर्थः। उक्तं पुरस्तात् 'अभ्यवहरणार्थानां मन्त्राणां सहैव क्रियायोगः' इति। तस्मात् सर्वा ऋच उक्त्वान्ते संभुञ्जीयाताम् ॥१४॥

त्रिरा......स्याताम् ॥ ततः प्रभृति त्रिरात्रमधःशायिनौ अक्षारालवणाशिनौ स्याताम्। अक्षारलवणाशिनावित्येव सिद्धे अक्षारालवणाशिनाविति द्विः प्रतिषेध-करणमन्यदपि प्रतिषेध्यमस्तीति ज्ञापनार्थम्। "क्षारलवणमधुमांसवर्जम्" इति हि शास्त्रान्तरे विहितम् ॥ १५ ॥

एव......ध्वनि ॥ एवमेवाध्वनि च अक्षारालवणाशिनौ स्याताम् ॥ १६ ॥

न सह भुञ्जीत ॥ अतिप्रसङ्ग इदमुच्यते। अध्वनि दध्योदनं न सह भुञ्जीत। नैतदस्ति। न हि दध्योदनविधिरध्वनि प्राप्तः। एवमेव शब्देनानन्तर एव विधिर्दृश्यते, त्रिरात्रमधःशायिनावक्षारलवणाशिनाविति। यद्येवं न सह भुञ्जीत सर्वदा तथा इत्यत्यन्तसहभोजनप्रतिषेधः ॥ १७ ॥

संव...ड्रात्रम् ॥ संवत्सरं द्वादशरात्रं षड्रात्रमिति मिथुनं नोपेयाताम्। ऋतु-कालाभिगामी स्यादित्युत्तरत्र वक्ष्यति। तद्वर्जमयं प्रतिषेधः, आहोस्वित्तेन सहेति।

१. IO adds प्रविशेयुः
२. IO adds ध्रुवं पश्यामि
३. A² adds मह्यं त्वादाद्बृहस्पतिः। मया पत्या...शतम्
४. IO omits ध्रुवं पश्यामीति
५. T. Space is left out for writing दध्योदनं
६. T omits अधःशायिनौ
७. T. Space is left out for writing न...द्वादशरात्रं
८. L omits च...अध्वनि
९. A omits सह
१०. L. नान्तर
११. A omits कालाभि

त्रिरात्रमन्ततः ॥१९॥ सायंप्रातर्वैवाहिकमग्निं परिचरेयातां यवैर्व्रीहिभिर्वा ॥२०॥ "अग्नये स्वाहा" इति सायम्[२] ॥२१॥ "सूर्याय स्वाहा" इति प्रातः ॥२२॥ "अग्नये स्विष्टकृते स्वाहा" इत्युभयोः ॥२३॥

"पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।
पुमानिन्द्रश्चाग्निश्च पुमांसं वर्धतां मयि । स्वाहा ॥"

ऋतुकालेऽपि न गच्छेदेवेत्यन्तप्रतिषेधोऽयम् । अत्यन्तसंयोगे हि द्वितीया संवत्सरमिति "कालाध्वनोरत्यन्तसंयोगे" इति । अथवा अविशेषप्रतिषेधः सर्वगामी ॥ १८ ॥

त्रिरात्रमन्ततः ॥ ऋतेऽपि वाशब्दाद्विकल्पा एते त्रिधयः । अर्थात् त्रिरात्रमन्ततः इत्यन्ततोग्रहणमतुल्यत्वज्ञापनार्थम् । पूर्वः पूर्वो विधिर्ज्यायानिति ॥ १९ ॥

सायं......भिर्वा ॥ दम्पती विवाह उत्पन्नमग्निं सायंप्रातः परिचरेयातां यवैर्व्रीहिभिर्वा ॥ २० ॥

अग्न......सायम् ॥ "अग्नये स्वाहा" इति सायमाहुतिं जुहोति ॥ २१ ॥

सूर्या......प्रातः ॥ "सूर्याय स्वाहा" इति प्रातराहुतिं जुहोति ॥ २२ ॥

अग्न......भयोः ॥ "अग्नये स्विष्टकृते स्वाहा" इत्युभयोः कालयोरुत्तरामाहुतिं जुहोति ॥ २३ ॥

पुमां......कामः ॥ "पुमांसौ मित्रावरुणौ" इत्यनेन मन्त्रेण गर्भकामः पूर्वामाहुतिं जुहुयात् । मन्त्रान्तरविधानान्नित्यमन्त्रस्य निवृत्तिः । कदा पुनरौपासनहोमस्यारम्भः ? विधानक्रमात् गृहप्रपदनहोमादूर्ध्वमस्यारम्भो युक्त इति मन्यामहे । केचित्तु पाणिग्रहणहोमानन्तरमेवास्यारम्भमिच्छन्ति । केचित्तु चतुर्थीहोमादूर्ध्वम् । तदुभयमन्त्रास्याविहितत्वादयुक्तमिति मन्यन्ते । यदि ह्याचार्यस्तथाभीष्टौ तयोरेवान्यतरस्मिन्नभीष्टे काले होममेतं व्यधास्यत्, यदि चायमतिहाय विवाहाधिकारं वैश्वदेववद्विधीयेत तदैवेयं मीमांसा युक्ता स्यात् कोऽस्यारम्भकाल इति ।

१. T. अत्र
२. All except A² add जुहुयात्
३. L omits कालयोः
४. A omits होम
५. A. यते तदेवैवं

निवाहे चतुर्थी कर्म



इति पूर्वा गर्भकामः ॥२४॥ दशरात्रमविप्रवासः ॥२५॥

## अथ एकादशः खण्डः

अथ चतुर्थ्यां त्रिरात्रे निर्वृत्ते स्थालीपाकस्य जुहोति ॥१॥ पयसि स्थालीपाकः पाकयज्ञेषु ॥२॥ वचनादन्यत् ॥३॥

"अग्ने प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि याऽस्याः पतिघ्नी तनूस्तामस्या अपजहि स्वाहा ॥

अपरिसमाप्यैव तु विवाहाधिकारमत्रास्य विधानं कुर्वन्नाचार्योऽयमेवास्यारम्भकाल इत्यवधारयति । अग्निहोत्रानुकृतित्वात्तस्य सायमुपक्रमत्वं सिद्धम् ॥ २४ ॥

दश......वासः ॥ दशरात्रं प्रवासो न भवति, नवसङ्गमत्वात् ॥ २५ ॥

## अथ एकादशः खण्डः

अथ......होति ॥ अथ चतुर्थ्यामिति रात्रिशब्दोऽहोरात्रवचनः; चतुर्थेऽहनीत्यर्थः । स्थालीपाकस्येत्यवयवषष्ठी । त्रिरात्रेनिवृत्त इति संशयनिवृत्त्यर्थमुक्तम् । चतुर्थ्यामित्येवोक्ते चतुर्थ्यां तिथौ वेति संशयो हि स्यात् । यद्येवं त्रिरात्रे निवृत्त इत्येव वक्तव्यम् । अपि च व्याख्यानतो विशेषप्रतिपत्तिः, न हि सन्देहादलक्षणं भवति । एवं तर्हि चतुर्थ्यामित्येवोक्ते सिद्धे त्रिरात्रे निवृत्त इति ब्रह्मचर्यापेक्षमुक्तम् । त्रिरात्रे ब्रह्मचर्ये निवृत्ते चतुर्थ्यां जुहोति । इतरथा संवत्सराद्यन्ते जुहोति ॥ १ ॥

पय......ज्ञेषु ॥ पयसि स्थालीपाकः स्यात् पाकयज्ञेषु । पाकयज्ञग्रहणात् स्थालीपाकं वा; गार्हपत्ये श्रपयित्वेत्येवमादिषु न स्यात् ॥ २ ॥

वचनादन्यत् ॥ "मुद्गौदनमित्येके" इत्येवमादिवचनादन्यदेव भवति, न विकल्पो न समुच्चयः ॥ ३ ॥

अग्ने......घ्नी ॥ स्वाहाकारान्ताः षण्मन्त्राः । तैर्हुत्वा "प्रजापते न त्वत्" इति सप्तमी होतव्या । सप्तमीति पुरस्ताद्याहृतिनिवृत्त्यर्थम् ॥ ४ ॥

१. T. अपि प्रवासः
२. A1, A2 and IO. निर्वृत्ते
३. T. पयसः
४. IO, A1 and A2 यस्याः
५. L. अवधारयन्
६. L. सङ्गमार्थां
७. A adds सः
८. A. त्रिरात्रे
९. L. त्यर्थ उक्तम्
१०. L omits एके



K—7

वायो प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपुत्र्या तनूस्तामस्या अपजहि स्वाहा ॥

सूर्य[2] प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपशव्या तनूस्तामस्या अपजहि स्वाहा ॥

अर्यमणं नु देवं कन्या अग्निमयक्षत ।
स इमां[3] देवो अर्यमा प्रेतो[4] मुञ्चातु नामुतस्स्वाहा ॥
वरुणं नु[5] देवं कन्या अग्निमयक्षत ।
स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतस्स्वाहा ॥
पूषणं नु देवं कन्या अग्निमयक्षत ।
स इमां देवः पूषा प्रेतो मुञ्चातु नामुतस्स्वाहा ॥"[6]

"प्रजापते न त्वत्" इति सप्तमी ॥४॥ सौविष्टकृत्यष्टमी ॥५॥

## अथ द्वादशः खण्डः

अध्यण्डामूलं पेषयत्यृतुवेलायाम् "उदीर्ष्वातः पतिवती" इति द्वाभ्यामन्ते

सौवि......ष्टमी ॥ सौविष्टकृत्यगष्टमी भवति । इहाष्टमीत्युपरिष्टाद्व्याहृतिनिवृत्त्यर्थः । यद्येवं सौविष्टकृती दशमी स्थालीपाकस्येत्यत्र किं वक्ष्यति भवान्? न हि तत्रोपरिष्टाद्व्याहृतयः सन्ति, अभूतिकर्मत्वात् । एवं तर्हि ऋङ्नियमार्थमन्त्रापेक्षं सङ्ख्यावचनम्, नाहुत्यपेक्षमन्त्रप्रधानम्; मन्त्राणां सप्तानाम् "यत् पाकत्रा" इतीयमृगष्टमी; तथा सत्युपरिष्टाद् व्याहृतयोऽपीह भवन्ति[7] । अथवा इह व्याहृतिनिवृत्तिमृङ्नियमं च करोति; ऋङ्नियममेव तत्र करोति, असत्वाद्व्याहृतीनाम्[8] । इह यदुक्तं तन्नूह्यताम् ॥ ५ ॥

## अथ द्वादशः खण्डः

अध्य......षिञ्चेत् ॥ तत ऋतुवेलायामागतायामध्यण्डामूलं पेषयित्वा "उदीर्ष्व" इति द्वाभ्यामृग्भ्यामन्ते स्वाहाकाराभ्यां तस्या नस्तः[9] दक्षिणतो निषिञ्चेत् । द्विर्मन्त्रपृथक्त्वात् ॥ १ ॥

१. IO, A[1] and A[2] यस्याः
२. T. सूर्याय
३. T. समां
४. T. प्रेतु
५. IO, A[1] and A[2] omit नु
६. All except A[2] add इति
७. A. भवतीति
८. L. असद्व्या-
९. L adds नस्तो

स्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेत् ॥१॥ "गन्धर्वस्य विश्वावसो-र्मुखमसि" इत्युपस्थं प्रजनिष्यमाणोऽभिमृशेत् ॥२॥ समाप्तेऽर्थे जपेत् "प्राणे ते रेतो दधाम्यसौ" इति ॥३॥ अपान्यानुप्राण्यात् ॥४॥

"यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी ।
वायुर्यथा दिशां गर्भ एवं गर्भं दधामि तेऽसौ ॥"

इति वा ॥५॥

"आ ते योनिं गर्भ एतु पुमान् बाण इवेषुधिम् ।
आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः ॥
तेषां माता पिपृहि जातानां जनयामि च ।
पुमांस्त्वं पुत्रमाधेहि पुमाननुजायताम् ॥
पुंसि वै पुरुषो रेतः तत्स्त्रियामनुसिञ्चतु ।

गन्ध......मृशेत् ॥ ततः प्रजनयिष्यन् तस्मिन् काले "गन्धर्वस्य" इति मन्त्रेणोपस्थमभिमृशेत् ॥ २ ॥

समाप्ते......असौ ॥ अर्थ इति कर्म । तस्मिन् कर्मणि समाप्ते "प्राणे ते रेतो दधाम्यसौ" इति जपेत् । असौ इत्यत्र सम्बुद्ध्या तस्या नाम निर्दिशेत् ॥ ३ ॥

अपा......प्राण्यात् ॥ ततोऽपान्यानुप्राण्यात् ॥ ४ ॥

यथा......विति वा ॥ इति वा मन्त्रं जपेत् ॥ ५ ॥

आते......ति वा ॥ एतद्वा मन्त्रगणं जपेत् । एतयोरविवक्षयोरपानप्राणे भवतः अभ्यण्डामूलाद्येतत्कर्म सर्वर्तुकाले कुर्यात् प्रथम इति सीमन्तोन्नयनवदनुक्तत्वादेकस्मिन् ऋतुकाले आदौ सकृदेव कर्तव्यम् । ऋतुकाल इति विधानात् "ऋतुकालगामी" इत्यत्र गमनविशेषं वक्ष्यामः ॥ ६ ॥

१. T Space is left out for writing something after this letter.
२. T omits this word.
३. T. अवीरोत्र
४. T. विवृहि जातां जनयति A[2] बिभृहि
५. IO. पुमांसं त्वं
६. A omits प्र

तथा तदब्रवीद् धाता तत्प्रजापतिरब्रवीत् ॥
प्रजापतिर्व्यदधात् सविता व्यकल्पयत् ।
त्वष्टा वै रूपं संदधान्नेजमेष परापतात् ॥
स्त्रीषु यमन्यान्[1] स्वादधात् पुमांस्त्वमददादिह ।
यानि भद्राणि बीजानि पुरुषा जनयन्ति च ॥
[2]तानि भद्राणि बीजान्यृषभा जनयन्ति नौ ।
तेऽभिष्टं पुत्रं जनयत्सुप्रसूर्धेनुका[3] भव ॥
अभिक्रन्दन् वीळयस्व गर्भमाधेहि सादयँ[4] ।
वृषाणं वृषन्नाधेहि प्रजायै त्वा हवामहे ॥
यस्यै योनिं प्रति रेतो दधातु पुमान् पुत्रो जायतां गर्भे अस्मिन् ।
तं पिपृहि[5] दशमास्योऽन्तरुदरे स जायतां श्रेष्ठतमस्स्वानाम्[6] ॥"

इति वा ॥६॥

तृतीये मासि[7] पुंसुवनम्[8] ॥७॥ पुष्येण[9] श्रवणेन वा सोमांशुं[10] पेषयित्वा

तृती......वनम् ॥ ततः प्रभृति गर्भिणी स्यात् । ततः तृतीये मासे पुंसुवनं नाम कर्म करोति । कथमेतद्गम्यते गर्भिणीति ? तृतीयमासवचनात् गर्भिणीति गम्यते; यदि न स्यात्, पुनरप्यण्डामूलादृतुकालगमनप्रसङ्गात्तृतीयत्वं[11] नेति । अथापि[12] गर्भरक्षणमिति प्रथमगर्भे सीमन्तोन्नयनमिति च वक्ष्यति । ततोऽपि च गर्भिणीति गम्यते ॥ ७ ॥

पुष्ये......षिञ्चेत् ॥ पुष्येण श्रवणेन वा सोमांशुं पेषयित्वाङ्कुशकण्टकं वा

१. T. यमत्या
२. IO omits तानि...न्तिनौ
३. IO and A² जनय सु-
४. T. साधयः
५. T. बृहि A² विभृहि
६. T. Space is left out for writing स्वानां इति वा
७. T and A² मासे
८. T, A¹ and A². पुंसवनं
९. IO and A¹ तिष्येण
१०. T. वासो मङ्गलं
११. A omits मूला
२२. A. यथापि

कुशदण्डकं वा न्यग्रोधस्य वा स्कन्धस्यान्त्यां शुङ्गां यूपस्याग्निष्टां वा संस्थिते वा यज्ञे जुह्वः संस्रावम् । "अग्निना रयिम्" "तन्नस्तुरीपम्" "समिद्धाग्निर्वनवत्" "पिशङ्गरूपः" इति चतसृभिरन्ते स्वाहाकाराभिः नस्तो दक्षिणतो निषिञ्चेत् ॥८॥

## अथ त्रयोदशः खण्डः

चतुर्थे मासि गर्भरक्षणम् ॥१॥ "ब्रह्मणाग्निस्संविदानः" इति षट् स्थालीपाकस्य हुत्वा "अक्षीभ्यां ते नासिकाभ्याम्" इति सूक्तेन प्रत्यृचमाज्यलेपेनाङ्गान्यनुविमृज्यात् ॥२॥

कण्टकमिव कण्टकम् । कुशकण्टकमिति दर्भसूचीत्यर्थः । न्यग्रोधस्य स्कन्धस्य शुङ्गमन्त्यां वा । अन्ते भवा अन्त्या । स्कन्धस्येति शाखानिवृत्त्यर्थमुक्तम् । शाखायामपि हि शुङ्गा भवन्ति । शुङ्गामिति कुळीमित्यर्थः । यूपस्याग्निष्टामग्नि वा पेषयित्वेत्यधिकारः । संस्थिते समाप्ते यज्ञे जुह्वत[ह्वः] संस्रावं वा यज्ञ इति सोमयागः । "अग्निना रयिम्" "तन्नस्तुरीपम्" "समिद्धाग्निर्वनवत्" "पिशङ्गरूपः" इत्येताभिश्चतसृभिर्ऋग्भिः अन्ते स्वाहाकाराभिस्तस्या दक्षिणतो नस्तो निषिञ्चेत् ॥ ८ ॥

## अथ त्रयोदशः खण्डः

चतु......क्षणम् ॥ चतुर्थे मासि गर्भरक्षणं नाम कर्म करोति ॥ १ ॥

ब्रह्म......मृज्यात् ॥ "ब्रह्मणाग्निः संविदानः" इति सूक्तस्य षड्भिः ऋग्भिः षळाहुतीः हुत्वा "अक्षीभ्यां ते नासिकाभ्याम्" इति सूक्तेन प्रत्यृचमाज्यलेपनान्यनुविमृज्यात् । यथालिङ्गं प्रधानहोमानन्तरं स्रुग्गतेन प्रत्यृचमित्यृगर्थसमवेतान्यङ्गानि तल्लिङ्गाभिर्ऋग्भिरनुविमृज्यादित्येवमर्थम् ॥ २ ॥

१. T. Space is left out for writing स्कन्ध...यूप
२. A[2] कुशुकण्टकं
३. A[2] संस्थितेन
४. T. समिधा
५. IO, A[1] and A[2] काराभ्यां
६. T. Space is left out for writing नस्तः
७. T. अङ्गानुविम्
८. L omits कुश
९. A. प्रत्युपमार्ज्य लेपनाङ्गानि

## अथ चतुर्दशः खण्डः

सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम् ॥१॥ स्नातामहतवासिनीं पश्चादग्नेरुपवेश्य[१] स्थालीपाकस्य जुहोति[२] ॥२॥ मुद्गौदनमित्येके ॥३॥ पुंवदुपकरणानि स्युः ॥४॥ नक्षत्रं च ॥५॥ "धाता ददातु दाशुषे" "धाता प्रजाया उत

## अथ चतुर्दशः खण्डः

सप्त......यनम् ॥ सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनं नाम कर्म करोति। "प्रथमगर्भे" इत्युक्तत्वात् द्वितीयादौ न करोति। एवं तर्ह्यकृते सीमन्तोन्नयने गर्भे विपन्ने ततो द्वितीये गर्भे उत्पन्ने न क्रियेत, अप्रथमत्वात्तस्य; नैष दोषः, सप्तमे मासि यः प्रथमगर्भः स प्रथमगर्भ इति ब्रूमः। एवमपि सप्तमे मासि सीमन्तोन्नयनकालात् प्राग्विपन्ने गर्भे ततो द्वितीये न क्रियेत। एवं[४] तर्हि कर्मणा प्रथमं विशेषयिष्यामः। कृतसीमन्तोन्नयनकर्माणं गर्भमपेक्ष्य इतरे द्वितीया भवन्ति, नाकृतसीमन्तोन्नयनकर्माणम्। सकृत् कृतस्य द्वितीयादौ निवृत्त्यर्थं प्रथमगर्भ इत्युक्तम्। अथ कर्मकाले यः प्रथमः स एव प्रथमगर्भ इत्युच्यते। कर्मार्थं हि प्रथमवचनम् ॥१॥

स्नातां......होति ॥ स्नातामहतवासिनीं पश्चादग्नेरुपवेश्य स्थालीपाकस्य जुहोति। "पश्चादग्नेरुपवेश्य" इति तस्याः प्राधान्येन संस्कारार्थत्वमुक्तम्। ततश्च सकृत्कर्तव्यमेव ॥ २ ॥

मुद्गौ......त्येके ॥ मुद्गौदनं हविः कुर्यादित्येके आचार्याः ॥ ३ ॥

पुंव......नि स्युः ॥ पुंवदुपकरणानि स्युः। पुंलिङ्गनामधेयान्यनामकान्यर्थप्राप्तान्युपकरणानि[५] स्युः। तत उदपात्रपक्षे कलशो भृङ्गार इति ब्रह्मपदे प्रतिष्ठाप्येत, न कमण्डलुं वा शरावं वा। एवं प्रोक्षणपात्रादावपि ॥ ४ ॥

नक्षत्रं च ॥ पुंलिङ्गनामधेयं स्यात्। तस्मिन् कुर्यादित्यर्थः। अश्वयुजौ पुनर्वसू तिष्यः हस्तः शतभिषक् प्रोष्ठपदा इति पुंलिङ्गानि ॥ ५ ॥

१. IO, A[1] and T omit this mantra.
२. IO. उपस्तीर्य
३. IO. हुत्वा
४. L omits एवं...प्रथमः स एव
५. A. धेयान्यामानर्थ

राय ईशे" "नेजमेष परापत" इति तिस्रः "प्रजापते[१]" इति षष्ठी ॥६॥ त्रिश्वेतया शलल्या दर्भसूच्या वोदुम्बरशलाटुभिस्सह मध्यादूर्ध्वं सीमन्तमुन्नयति "भूर्भुवस्स्वः" इति ॥७॥ उत्सङ्गे निधाय त्रिवृते कृत्वा कण्ठे बध्नाति "अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव" इति ॥८॥ अथाह वीणागाथिनौ 'राजानं संगायत' इति 'यो वान्यो वा वीरतरः' इति॥९॥उदपात्रे अक्षतानवनीय "विष्णुर्योनिं कल्पयतु" "नेजमेष परापत" इति षळृचेन पाययेत् "राकामहम्"

धाता......षष्ठी ॥ षष्ठीत्यनुक्ते "नेजमेष परापत" इत्येका वा तिस्रो वेति संशयः स्यात्; तन्निवृत्त्यर्थं षष्ठीत्युक्तम् ॥ ६ ॥

त्रिश्वे......रिति ॥ त्रिश्वेतया त्रिवृतेत्यर्थः। शलल्या दर्भसूच्या वा उदुम्बरशलाटुभिः सह उदुम्बरशलाटुसंयुक्तयेत्यर्थः। तस्याः सीमन्तं केशबन्धनमुन्नयति "भूर्भुवस्स्वः" इति ॥ ७ ॥

उत्स......वेति ॥ ततस्तामुदुम्बरशलाटुसंयुक्तामुत्सङ्गे निधाय पुनस्त्रिवृते सूत्रे कृत्वा तस्याः कण्ठे बध्नाति—"अयमूर्जावतो वृक्षः" इत्येतेन मन्त्रेण। मन्त्रलिङ्गानुमानेन शललीं निबध्नातीति चेत्, न, उभयोरन्यतराभिधा मन्त्रा दृश्यन्ते, यथा वेदयोक्त्रे परिषिञ्चन् जपति "कामाय त्वा" "वेदोऽसि" इति ॥ ८ ॥

अथा......इति ॥ अथाह वीणागाथिनः संप्रेषयतीत्यर्थः। राजानं संगायतेत्यवसाय यो वान्योऽपीतर इत्युभयोः संप्रैषयोः समुच्चये वीणागाथिनां विकल्पः स्यात्। वाजसनेयके सहैवाम्नातम् "राजानं सङ्गायतं यो वान्योऽपीतरः[वीरतरः]" इति ॥ ९ ॥

उद......सृभिः ॥ तत उदपात्रेऽक्षतानवनीय "विष्णुर्योनिं कल्पयतु" इति तिस्रः, "नेजमेष परापत" इति तिस्रः षळृ भवन्ति। "राकामहम्" इति चतसृभिश्च पाययेत्। मन्त्रपृथक्त्वात् कर्मपृथक्त्वम् ॥ १० ॥

१. IO, A[1] and T add इति द्वाभ्यां
२. IO adds न त्वदेतानि
३. IO, A[1] and A[2] शटालुभिः
४. IO and A[2] omit नेजमेष परापत
५. L. षष्ठीमित्यं-
६. L omits परापत
७. L. षष्ठीमित्यु
८. L omits न
९. L. संगय

इति चतसृभिः ॥१०॥ अथास्या उदरमभिमृशेत् "सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुश्छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूः वामदेव्यं मध्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं धिष्ण्यं शफाः" । मोदमानीं गापयेन्महाहैमवतीं वा ॥११॥ ऋषभो दक्षिणा ॥१२॥

## अथ पञ्चदशः खण्डः

काकादन्या मशकादन्या कोशातक्या बृहत्या कालकीतकस्येति मूलानि पेषयित्वोपलेपयेद् 'देशे यस्मिन् प्रजायेत ॥१॥ रक्षसामपहत्यै ॥२॥

अथा......तीं वा ॥ अथ तामाचमय्य अथास्या उदरमभिमृशेत् "सुपर्णोऽसि" इत्यनेन मन्त्रेण । शफा इति मन्त्रान्तः । अनितिकरणान्तोऽपि । तत्र मोदमानीं गापयेत् । वीणागाथिभिः महाहैमवतीं वा गापयेत् । गाथयोरेते नामनी इति केचिदाहुः । मोदमानीति महाकाली; महाहैमवतीत्युमादेवीति केचिदाहुः ॥११॥

ऋष......क्षिणा ॥ ऋषभो दक्षिणा । स आचार्याय दातव्यः ॥ १२ ॥

## अथ पञ्चदशः खण्डः

काका......ये ॥ यस्मिन् देशे प्रजायेत एतानि मूलानि पेषयित्वोपलेपयेत् ॥ १ ॥

रक्ष......हत्यै ॥ कस्मात्? रक्षसामपहत्यै । फलहेतुवचनमन्यत्राप्यायुर्वेदादिषु यद्राक्षोघ्नं कर्माम्नातम् तत्कुर्यादित्येवमर्थम् । अनाम्नातमपि स्त्रीभिर्यत्क्रियेत तदपि कारयेत् । अग्निं तत्र निदध्यात् । सोऽपि राक्षोघ्नः प्रसिद्धः । एतस्मिन्नेव सूतकेऽग्नाविति प्रसिद्धवद् ब्रुवन्नेतमर्थं दर्शयति ॥ २ ॥

१. T adds प्रत्यृचं पाययेत्
२. IO and A¹ सोम आत्मा
३. IO and A¹ omit यजूंषि नाम
४. A¹ and T omit मध्यं
५. A³ omits बृहद्रथन्तरे पक्षौ
६. A¹ omits शफा and has इति T adds इति
७. T. क्रीतस्य
८. देशं
९. IO. यद्यस्मिन्
१०. IO and L. प्रजायै
११. A. अनित्र
१२. L omits उमादेवी
१३. A adds फलहत्यै

## अथ षोडशः खण्डः

अथ जातकर्म ॥१॥ जातं कुमारं त्रिरभ्यपान्यानुप्राण्यात् ॥२॥ "ऋचा प्राणिहि। यजुषा समनिहि। साम्नोदनिहि" इति जातमभिमन्त्र्य ॥३॥ सर्पिर्मधुनी दध्युदके च सन्नीय ॥४॥ एष एव मधुपर्कः ॥५॥ व्रीहियवौ वा सन्निकृष्य ॥६॥ त्रिः प्राशयेज्जातरूपेण

## अथ षोडशः खण्डः

अथ......कर्म ॥ अथ जातकर्म करोति। जातकर्मेति नामधेयम् ॥ १ ॥

जातं......प्राण्यात् ॥ जातं कुमारं त्रिरभ्यपान्यानुप्राण्यात्। अनुप्राणनं सकृदेव कुर्यात्, त्रिरभ्यपान्येत्यपानने कृतार्थत्वात् सङ्ख्यायाः। न वयमेवं ब्रूमः। अभ्यपान्यानुप्राण्यादित्येतस्य कृत्स्नस्य त्रित्वं विशेषणमिति ब्रूमः। तस्मात् सकृदेवाभ्यपान्यनुप्राणिति। एवं त्रिः करोति ॥ २ ॥

ऋचा प्राणि......मन्त्र्य ॥ "ऋचा प्राणिहि" इत्यनेन मन्त्रेण जातं कुमारमभिमन्त्र्य ॥ ३ ॥

सर्पिः......नीय ॥ सर्पिर्मधुनी दध्युदके च सन्नीय प्राशयेत्। प्राशनक्रम उपरिष्टाद्वक्ष्यते ॥ ४ ॥

एष... पर्कः ॥ एष मधुपर्क इत्येतावता सिद्धे एवकारकरणमवधारणार्थम्। अवधारणं चान्यस्याप्यस्तित्वं ज्ञापयति। उक्तं हि—"दधिमधुसंसृष्टं मधुपर्कम्, पयो वा मधुसंसृष्टम्, अभावे उदकम्" इति ॥ ५ ॥

व्रीहि......कृष्य ॥ अथवा व्रीहियवौ सन्निकृष्य प्राशयेत्। पूर्वेणेदं विकल्प्यते ॥ ६ ॥

त्रिः प्रा......विति ॥ अनेन मन्त्रेण प्राशयेत्, जातरूपेण त्रिः, न पाणिनैव ॥

१. All except A². प्राणुहि
२. All except A². समनुहि
३. All except A². दनुहि
४. IO. सन्नहनीय
५. T. कृत्य

"प्र ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सविता मघोना ।
आयुष्मान् गुपितो देवताभिश्शतं जीव शरदो लोक अस्मिन्नसौ ॥"इति॥७॥

नक्षत्रनामात प्रब्रूयात्॥८॥नामास्य दधाति घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरम् ॥९॥ अपि वा षळक्षरम् ॥१०॥ अयुग्मवददन्त्यं

नक्ष......ब्रूयात् ॥ अस्मिन्मन्त्रे असावित्यत्र कुमारस्य नक्षत्रनाममात्रं संबुद्ध्या ब्रूयात् । अनुच्यमाने हि वक्ष्यमाणस्य नाम्नः प्रसङ्गः स्यात् । सम्बुद्धिः कथमिति चेत्, कार्तिक, रौहिण, मार्गशीर्ष, आर्द्रक, पुनर्वसो, तिष्य, आश्लेष, माघ, फाल्गुन, [फाल्गुन], हस्त, चैत्र, स्वाते, विशाख, अनूराध, ज्येष्ठ, मूलक, अषाढ, अषाढ, श्रावण, [श्राविष्ठ],शातभिषक्, प्रोष्ठपाद, प्रोष्ठपाद, रैवत, आश्वयुज, आपभरण—इति ब्रूयात् ॥ ८ ॥

नामा......क्षरम् ॥ नामास्य कुमारस्य दधाति । कथम् इति चेत्—घोषवदादि । वर्णा द्विप्रकाराः—घोषवन्तोऽघोषवन्तश्चेति । तत्र घोषवद्वर्णादि । उक्तं हि—वर्गाणां प्रथमद्वितीया शषसहाश्चाघोषाः, घोषवन्तोऽन्य इति । अन्तरन्तस्थम् इति—अन्तःशब्दो मध्यवाची । यवरला अन्तस्थाः । तेषामेको वर्णो मध्ये स्यादित्यर्थः । अभिनिष्ठानान्तमिति । अभिनिष्ठानो विसर्जनीयः । "अभिनिसस्तनः शब्दसंज्ञायाम्" इति चोक्तम् । विसर्जनीयान्तमित्यर्थः । यथा—भद्रः, देवः, भवः, इन्द्रः—इति द्व्यक्षराणि । जनार्दनः, देवमित्रः, वासुदेवः, धनञ्जयः—इति चतुरक्षरः [राणि]॥ ९ ॥

अपि......क्षरम् ॥ अपि षळक्षरं वा भवति । अमितविक्रमः, नारायणदत्तः ॥

अयु......मार्यै ॥ एवंलक्षणमयुग्माक्षरमदन्त्यम् । ऋतुलसा दन्त्याः । न दन्त्यो वर्णोऽस्मिन् विद्यत इत्यदन्त्यः । ननु भोः ! कुमार्या अपि जातकर्म विद्यते यदयं जातं त्रिरभ्यपान्येत्येव सिद्धे जातं कुमारमिति कुमारग्रहणं कुर्वन् विज्ञापयति—

१. IO. खतो यस्य
२. IO. प्रसूतिं
३. IO and T. गुप्तो
४. A² and L. ब्रूयात्
५. T. अभिष्टानं
६. L omits इति
७. A. घोर्णादि

नामकरणम्



कुमार्यै ॥११॥ कृतं कुर्यात् ॥१२॥ न तद्धितान्तम् ॥१३॥ तदस्य माता पिता च विद्याताम् ॥१४॥ दशम्यां व्यावहारिकं ब्राह्मणजुष्टम् ॥१५॥ कृष्णस्य शुक्लकृष्णानि लोहितानि च रोमाणि मर्षी कारयित्वैतस्मिन्नेव चतुष्टये चतुः प्राशयेदिति माण्डूकेयः[1] । "भूर्ऋग्वेदं त्वयि दधाम्यसौ स्वाहा । भुवो यजुर्वेदं त्वयि दधाम्यसौ स्वाहा । स्वस्सामवेदं त्वयि दधाम्यसौ

कुमारस्यैव जातकर्म, न कुमार्या इति । अथ कस्मात् कुमार्या एवं विधानमिति चेत्, व्यावहारिकस्याप्येतदेव लक्षणमिति वक्ष्यामः । तस्माद् व्यावहारिकार्थं लक्षणवचनं स्यात् । कुमार्या अपि ॥ ११ ॥

कृतं......कुर्यात् ॥ कृत्प्रत्ययान्तं नाम कुर्यात्—ब्रह्ममूर्तिः, देवत्रातः, भवदत्तः इति ॥ १२ ॥

न तद्धितान्तम् ॥ तद्धितप्रत्ययान्तं न कुर्यात् । कृतं कुर्यादित्येव वक्तव्यम्, न तद्धितप्रतिषेधः कार्यः । अप्राप्तस्यापि तद्धितस्य प्रतिषेधवचनं लक्षणानित्यत्वज्ञापनार्थम् । तद्धितवर्जं यथा तथा नाम कुर्यादिति । तथा लक्षणविधानमनर्थकं स्यादिति चेत्, अभिमतपक्षप्रदर्शनार्थं लक्षणविधानं स्यात् ॥ १३ ॥

तद......द्याताम् ॥ तन्नामास्य कुमारस्य माता पिता च विद्यातामिति, नान्ये ॥ १४ ॥

दश......जुष्टम् ॥ दशम्यां रात्र्यां व्यावहारिकं नामैवंलक्षणं कुर्यात् । कुमार्या लक्षणविधानं व्यावहारिकमप्येवंलक्षणमेवेति ज्ञापयति । ब्राह्मणजुष्टं ब्राह्मणैः सेवितपूर्वं ब्राह्मणप्रियमिति वा ॥ १५ ॥

कृष्ण......हेति ॥ कृष्णमृगस्य कृष्णानि शुक्लानि रोहितानि च रोमाण्याहाव तानि मर्षी कारयित्वा एतस्मिन्नेव चतुष्टये मधुपर्के वक्ष्यमाणैश्चतुर्भिर्मन्त्रैः चतु-

१. A[1] and T add च
२. IO omits शुक्ल
३. T adds इति
४. A. विधानानां

स्वाहा । भूर्भुवस्स्वर्वाकोवाक्येतिहासपुराणान् सर्वान् वेदांस्त्वयि दधाम्यसौ स्वाहा" इति॥१६॥ मेधाजननं दक्षिणे कर्णे "वाग्" इति त्रिः॥१७॥ "वाग्देवी मनसा संविदाना प्राणेन वत्सेन सहेन्द्रप्रोक्ता जुषतां त्वा सौमनसाय देवीं महीमिन्द्रावाणी चीस्सलिला स्वयंभूः" इति चानुमन्त्रयीत ॥१८॥ शणसूत्रेण विग्रथ्य जातरूपं दक्षिणे पाणावपिनह्योत्थानादूर्ध्वं दशम्यां ब्राह्मणेभ्यो दद्यात् ॥१९॥ अमा वा कुर्वीत ॥२०॥

प्राशयेदिति माण्डूकेय आचार्य आह । आचार्यग्रहणं विकल्पार्थम् । माण्डूकेयपक्षेऽपि प्राशनादन्यत् समानम् । एवकारकरणमवधारणार्थम् । चतुष्टये एवेति व्रीहियवयोर्निवृत्तिः ॥ १६ ॥

मेधा......ति त्रिः ॥ मेधाया जननं दक्षिणे कर्णे कुर्यात् । कथमिति चेत्, "वाग्" इति त्रिराह । एतन्मेधाजननं नाम ॥ १७ ॥

वाग्दे......यीत ॥ "वाग्देवी" इत्यनेन मन्त्रेणानुमन्त्रयीत च ॥ १८ ॥

शण......दद्यात् ॥ शणसूत्रेण जातरूपं विग्रथ्य कुमारस्य दक्षिणे पाणावपिनह्य तद्दशम्यामुत्थानादूर्ध्वं ब्राह्मणेभ्यो दद्यात् । उत्थानादूर्ध्वमित्येतावत्युच्यमाने उत्थानादूर्ध्वं यदा कदाचित् स्यात् । ऊर्ध्वशब्दः प्राङ्निवृत्तमेव करोति । तस्माद्दशम्यामित्युक्तम् । दशम्यामित्येवोच्यमाने उत्थानात् प्रागपि स्यात् । तस्मादुत्थानादूर्ध्वमित्युक्तम् ॥ १९ ॥

अमा वा कुर्वीत ॥ अमा वेति तेन कुमारेण सहैव वा कुर्वीतेत्यर्थः ॥ २० ॥

१. T omits त्रिः
२. T. सुवि
३. T. Space is left out for writing प्राणेन वत्से
४. T. Between णी and ची, there is space for writing 6 letters.
५. All except IO. येत
६. IO adds "आयुष्यम्" इति सूक्तेन

उत्थानारम्भं कर्म



## अथ सप्तदशः खण्डः

दशरात्रे चोत्थानम् ॥१॥ मातापितरौ शिरस्स्नातावहतवासिनौ कुमारश्च ॥ २॥ एतस्मिन्नेव सूतकेऽग्नौ स्थालीपाकं श्रपयित्वा जन्मतिथिं हुत्वा

## अथ सप्तदशः खण्डः

दश... त्थानम् ॥ दशरात्रे उत्थानं कर्तव्यम्। चशब्दः सुखमुखोच्चारणार्थः; न स्त्य[नास्त्य]क्षरबहुत्वकृतो विशेषः। दशरात्र इति दशमेऽहनीत्यर्थः। एवं तर्ह्याशौचाहस्तु स्यात्। जननेऽप्येवमेव स्यादिति दशाहमाशौचं विहितम्। एवं तर्हि दशरात्रे अतीत इति ब्रूमः। दशम्यामिति चातीतायामिति भवति; तथा सत्येकादशप्रभृति नक्षत्रहोमात् प्रागुत्थानकालो विहितो भवति, तस्य पुरस्ताद्विधानात्। तथा चैकेषामाम्नातम्। अथवा चशब्दः कालानित्यत्वज्ञापनार्थः। एकादश्यां द्वादश्यां वा मासापवर्गादिति शास्त्रान्तरे काल आम्नातः। दशम्यां द्वादश्यां वेति च शास्त्रान्तरविहितम्। तस्माद्दशमेऽहन्युत्थानमस्ति। एवं च दशम्यां व्यावहारिकं दशम्यां ब्राह्मणेभ्य इति चोपपन्नतरौ भवतः। तत्र यदुक्तमाशौचाह इति, नैष दोषः; शुद्धं हि तदहर्भवति। कथमिति चेत्, उत्थानमित्यन्वर्थसंज्ञा सूतकोत्थानमिति। अशुद्धः संकुच्यासीनाः तदहश्शुद्धा भूत्वोत्तिष्ठन्त इति। जननेऽप्येवमेवेति पक्षान्तरे दशाहमाशौचमस्ति। अस्मिन्पक्षे नवाहमाशौचं स्यात् यथा मरणाशौचेऽपि नवाहःकालता पितृमेधे विहिता "नवरात्रं वा" इति, तद्वदिहाप्यभ्युपगन्तव्यम्। तस्माद्दशमेऽहन्युत्थानं स्यात्। तस्मिन्नेवाहनि शुद्धिः ॥ १ ॥

माता......रश्च ॥ मातापितरौ शिरस्स्नातावहतवासिनौ च भवतः। कुमारश्च शिरस्स्नातः, न तस्य वाससा कार्यमस्ति। अथवा तमप्यहते वाससि गृह्णीयात् ॥ २ ॥

एत......तानि ॥ एतस्मिन्नेव रक्षोऽवहननार्थे सूतकेऽग्नौ स्थालीपाकं श्रपयित्वा जन्मतिथिं हुत्वा यस्यां तिथौ जातः तां तिथिं चतुर्थ्यन्तां हुत्वा प्रथमायै, द्वितीयायै, तृतीयायै, चतुर्थ्यै, पञ्चम्यै, षष्ठ्यै, सप्तम्यै अष्टम्यै, नवम्यै, दशम्यै, एकादश्यै, द्वादश्यै, त्रयोदश्यै, चतुर्दश्यै, पञ्चदश्यै इत्येवम्। अथ त्रीणि च जन्मभानि

१. All except T. सूतिकाग्नौ
२. A. न चास्य क्षर-
३. A. ह्यपि

त्रीणि च भानि सदैवतानि ॥३॥ तन्मध्ये जुहुयाद् यस्मिन् जातः स्यात् ॥४॥ पूर्वं तु दैवतं सर्वत्र ॥५॥

"आयुष्टे अद्य गीर्भिरयमग्निर्वरेण्यः ।
पुनस्ते प्राण आयातु परा यक्ष्मं सुवामि ते ॥"

सदैवतानि जुहोति । सूतकेऽग्नाविस्येतावतापि तस्मिन्हवनसिद्धौ एतस्मिन्नेवेति वचनं तस्मिन्नेवाग्नौ श्रपणार्थम्[१]। भानीति नक्षत्राणि । जन्मनक्षत्रस्य उभयतो दशमे नक्षत्रे इत्युच्यते । नक्षत्राणां नामधेयानि देवताश्च श्रुतिस्मृत्यनुरोधेन यथैभ्यो होतव्यम्, तथा प्रदर्श्यन्ते । अग्नये कृतिकाभ्यः । प्रजापतये रोहिण्यै । सोमाय मृगशीर्षाय । मार्गशीर्षायेति वा[२] । रुद्रायार्द्रायै । अदित्यै पुनर्वसुभ्याम् । बृहस्पतये तिष्याय । सर्पेभ्य आश्लेषाभ्यः । पितृभ्यो मघाभ्यः । अर्यम्णे फल्गुनीभ्याम् । भगाय फल्गुनीभ्याम् । वैपरीत्येनापि श्रवणमस्ति—पूर्वयोर्भग उत्तरयोरर्यमेति । सवित्रे हस्ताय । त्वष्ट्रे चित्रायै । वायवे स्वात्यै । इन्द्राग्नीभ्यां विशाखाभ्याम् । मित्रायानूराधेभ्यः । अनूराधाभ्य इति वा । इन्द्राय ज्येष्ठायै । निर्ऋत्यै मूलाय । अद्भयोऽषाढाभ्यः । विश्वेभ्यो देवेभ्योऽषाढाभ्यः । विष्णवे श्रवणाय । वसुभ्यः श्रविष्ठाभ्यः । वरुणाय शतभिषजे । अजायैकपदे प्रोष्ठपदेभ्यः । अहये बुध्न्याय प्रोष्ठपदेभ्यः । पूष्णे रेवत्यै । अश्विभ्यामश्वयुग्भ्याम् । यमायापभरणीभ्यः ॥ ३ ॥

तन्म......स्यात् ॥ तृतीयं प्रथमं द्वितीयम् इति क्रमेण जन्मभानि होतव्यानि । एवमेव नक्षत्रक्रमानुल्लङ्घनेन यस्मिन् जातः तन्मध्ये हुतं भवति ॥ ४ ॥

पूर्वं......सर्वत्र ॥ प्रयुज्यत इति वा जुहुयादिति वा अध्याहारः । सर्वत्र[३] इति त्रयाणामपीत्यर्थः । इतरथा यस्मिन् जात इत्यधिकारात् तस्यैव स्यात् ॥ ५ ॥

आयु......त्सरात् ॥ दशमीमिति[४] संशयनिवृत्त्यर्थमुक्तम् । अग्नये कृत्तिकाभ्य इत्यस्य हि प्रसजति । तथा हि नक्षत्रात् पूर्वमेव दैवतं प्रयुक्तं भवति । दशमीमिति वचनात्तु यत्नात् पृथगेवेत्यवधारितं भवति । दशम्यां व्यावहारिकमिति

१. A. तस्मिन्निव न
२. L omits मार्गशीर्षायेति
३. L omits this word.
४. L omits दशमी...दशम्यां

उत्थानारम्भं कर्म



"आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमम् ॥"

"त्वं सोम महे भगम्" इति दशमीं स्थालीपाकस्य हुत्वा ब्राह्मणान् स्वस्ति वाचय नामधेयं प्रकाशं कृत्वा । एवमेव मासि मासि जन्मतिथिं हुत्वोर्ध्वमा संवत्सरात् ॥६॥ गृह्याग्नौ जुहोति ॥७॥

विहितं नाम उत्थानहोमानन्तरं दधाति । तस्योक्तः क्रमः । तत ऊर्ध्वं स्वस्तिवाचनम् । स्वस्तिवाचने प्राक् स्वस्तेर्नाम कुर्वन्ति व्यावहारिकम् । असै देवदत्तशर्मणे स्वस्ति भवन्तो ब्रुवन्त्विति, देवदत्ताय इति वा । एवमेव मासि मासि जन्मतिथिं हुत्वा अत ऊर्ध्वं विहितमपि सर्वं हवनं करोति । आ संवत्सरात् संवत्सरस्यासमाप्तेः । एवमेव मासि मासि जुहोति इत्येतावता सिद्धे जन्मतिथिमिति होमात्प्राक्तनस्य सर्वस्य अभावार्थम् । इतरथा मातापितरौ शिरःस्नातावहतवासिनौ कुमारश्च इत्येतदपि प्रसजेत्, जन्मतिथिहोमादेर्हवनस्य विहितत्वात् । स्वस्तिवाचनमपि निवर्तते । स चतुर्विधो मासः । तत्र कीदृग्विधे मासि जुहोति? कथं चतुर्विधो मास इति चेत्, उक्तं हि—"दर्शादर्शाच्चन्द्रमसास्त्रिंशद्दिवसस्तु सावनो मासः" इति । सौर्यो राशिभोगः । "शशाङ्कभगणस्थितिस्तार्क्षः" इति आर्क्षो मासः । सर्वेषामल्पीयात् तस्मात् तस्मिन्मासे जुहोति, तस्य प्रथमप्राप्तेः । तस्माज्जन्मनक्षत्रे करोति; तथैव च सिद्धिर्लोके । ननु चान्द्रेण मासेन लोकव्यवहारः । नैष दोषः । इह नक्षत्रहोमप्राधान्यात् जन्मनक्षत्रहोमार्थो मासो गृह्यते ॥ ६ ॥

गृह्य......होति ॥ गृहे भवो गृह्यः पाकाग्निरित्यर्थः । जन्मतिथिहोमादीनि प्रजासंस्कारकर्माणि गृह्येऽग्नावेव करोति; नौपासने, न मन्थनादिनिष्पादिते । न जन्मतिथिहोमस्यैवेदं शेषभूतं स्यात्; गृह्येऽग्नौ करोतीति नैतद्युक्तम् । एवमेव सूतकेऽग्नौ स्थालीपाकं श्रपयित्वा जन्मतिथिं गृह्येऽग्नौ हुत्वेत्यवक्ष्यत् । पृथग्विधानात् सर्वार्थ एवायं विधिर्भवति ॥ ७ ॥

१. A². च
२. A omits सिद्धे
३. A. नैतदुक्तम्

## अथ अष्टादशः खण्डः

चतुर्थे मासि निष्क्रमणिका[१] ॥१॥ स्नातः कुमारोऽलङ्कृतः सर्वसुरभिगन्धैः माल्यैश्च यथोपपादं मातुरङ्कगतो या वान्या मातृस्थाने ॥२॥ सकुशपाणिः कुशैर्होतारमन्वारभते ॥३॥ "सं पूषन्नध्वनः" इति सूक्तेन प्रत्यृचं स्थालीपाकस्य हुत्वा ब्राह्मणान् स्वस्ति वाच्य पूर्वं देवायतनं गत्वा सातपत्रः कुमारः सुहृद्गृहाणि च[३] ॥४॥ ततः पर्येति ॥५॥ अथ ब्राह्मणभोजनम् ॥६॥

## अथ अष्टादशः खण्डः

चतु......णिका ॥ चतुर्थे मासि निष्क्रमणिका कर्तव्या । निष्क्रमणिकेति कर्मणोऽन्वर्थसंज्ञा, यत्कृत्वा[२] निष्क्रामति ॥ १ ॥

स्नातः......स्थाने ॥ स्नातः कुमारः सर्वसुरभिगन्धैर्माल्यैश्च यथोपपादमलङ्कृतः । इह सर्वशब्दो बहुवाची, न कृत्स्नवाची । यथोपपादवचनान्मातुरङ्कगतो भवति, या वान्या मातृस्थाने स्यात् मातृष्वसृपितृव्यभार्यैश्चैवंविधा तस्या अङ्कगतो भवति ॥ २ ॥

सकु......भते ॥ स एवंभूतः कुशपाणिर्भूत्वा तैः कुशैर्होतारमन्वारभते । होतारमिति आचार्यमित्यर्थः ॥ ३ ॥

सं पू......णि च ॥ अथाचार्यः "सं पूषन्" इति सूक्तेन प्रत्यृचं स्थालीपाकस्य जुहोति । हुत्वा "सं पूषन्नध्वनस्तिरः" इति भवति हि । ततो ब्राह्मणान् स्वस्ति वाच्याथ सातपत्रः[४] पूर्वं देवायतनं गत्वा ततः सुहृद्गृहाणि च गत्वा ततो ग्रामम् । पूर्वमिति न वक्तव्यम् । आम्नातक्रमाद्देवायतनगमनस्य पूर्वत्वं हि भवति । एवं तर्हि पूर्वमिति कर्मसमाप्तिज्ञापनार्थम् । कर्म परिसमाप्तम् । इदानीं गन्तव्यानां देशानां देवायतनं पूर्वं गच्छति इति; इतरथा आवापस्थाने गमनमभविष्यत् ॥ ४ ॥

ततः पर्येति ॥ पर्येतीति प्रत्यागच्छतीत्यर्थः ॥ ५ ॥

अथ......जनम् ॥ अथ ब्राह्मणभोजनं कुर्यात् ॥ ६ ॥

१. T omits का
२. IO. कृत्वा
३. IO, A[1] and T omit च
४. L omits अथ सातपत्रः

अन्नप्राशनम्



## अथ एकोनविंशः खण्डः

षष्ठे मास्यन्नप्राशनम् ॥१॥ आजमन्नाद्यकामस्य ॥२॥ तैत्तिरं ब्रह्मवर्चसकामस्य ॥३॥ [1]मात्स्यं जवनकामस्य ॥४॥ घृतौदनं तेजस्कामस्य ॥५॥ [2]मध्वोदनमायुष्कामस्य ॥६॥ दध्योदनमिन्द्रियकामस्य ॥७॥ क्षीरोदनं पशुकामस्य ॥८॥ दधिमधुघृतमिश्रमन्नं प्राशयेत् ॥९॥

## अथ एकोनविंशः खण्डः

षष्ठे......शनम् ॥ षष्ठे मासि वर्तमाने अन्नप्राशनं नाम कर्तव्यम्। अन्वर्थसंज्ञा ॥ १ ॥

आज......मस्य ॥ अजस्य इदं आजं मांसमन्नाद्यकामस्यान्नं स्यात्, [4]अदनीयत्वात्। पिता कामयते 'अयं कुमारोऽन्नाद्यवान् भवतु' इति; न ह्यात्मनो हिताहिताभिज्ञः कुमारः। कथमेतद्गम्यते मांसमिति? नन्वाजं पयः स्यात् घृतं वा। न वयमाजमित्येतावता मांसमिति ब्रूमः; किं तर्हि? तैत्तिरं इत्यत्र पयसोऽभावात् [5]मांसमतेन[पदेन] सामान्यचोदितत्वात् मांसमिति ब्रूमः ॥ २ ॥

तैत्ति......मस्य ॥ तैत्तिरं ब्रह्मवर्चसकामस्यान्नं स्यात्, ति[6]त्तिरेर[7]दनीयत्वात् ॥

मात्स्यं......मस्य ॥ जवनं प्रथनं यशः मत्स्यस्यान्नं कुर्यात्। अदनीयत्वाद् एतानि द्रव्याण्यन्नकार्ये भवन्ति, आहोस्वित् व्यञ्जनकार्ये? [8]अन्नकार्य एव भवन्ति। न हि प्राशनमात्रे व्यञ्जनकार्यमस्ति। तृप्त्यर्थं यतमानस्य हि व्यञ्जनक्रिया ॥ ४ ॥

घृतौ.....मस्य ॥ तेजस्कामस्य घृतौदनं भवति। अन्नकार्ये घृते[9] सिक्त इति वा ॥ ५—८ ॥

दधि......श्नीयात् ॥ इदानीं नित्यविधिः। दध्ना मधुना घृतेन च मिश्रीकृतान्नं प्राशयेत् ॥ ९ ॥

१. IO omits मात्स्यं जवनकामस्य
२. A[1] and T omit मध्वो... पशुकामस्य
३. IO. गत
४. L. अनदनीयत्वात्
५. L. मांसतेन
६. A. तैत्तिरेः
७. L. अनद
८. L omits अन्नकार्य एव
९. A. घृतो



K—9

"अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्ज्जं नो धेहि द्विपदे चतुष्पदे" ॥

"यच्चिद्धि ते" "महश्चित्"

"इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सोमराजन् ।
मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथासत् ॥"

इति हुत्वा "अग्न आयूंषि" इत्यभिमन्त्र्य महाव्याहृतिभिः प्राशनम् ॥१०॥

अन्न.........शनम् ॥ "अन्नपते" इत्याम्नाता एका ऋक् "यच्चिद्धि" "महश्चिदग्ने" इत्यृचोः प्रतीकग्रहणम् । बह्वयश्चैवंप्रतीकाः सन्ति । तथाप्याग्नेयीभ्यामितराभ्यां सह विहितयोः सम्भवे साम्यं युक्तमिति आग्नेय्योः "यच्चिद्धि ते पुरुषत्रा" "महश्चिदग्न एनसः" इत्येतयोर्भवति । प्राथम्यात् "यच्चिद्धि ते विशो यथा" "महश्चित्वं" इति एतयोरिति चेत्, न प्राथम्यमृचां नियमहेतुरिति ज्ञापितमाचार्येणैव । "आ कलशेषु धावति" इति द्वयोर्ऋचोः सत्योरुत्तरान्निपत्य पूर्वां नियन्तुं यत्नं कृतवान् । "आ कलशेषु धावति पवित्रे" इति ततः सिद्धम्—प्रथमं वा नियम्यतेति न्यायो नर्क्षु भवतीति । "इममग्ने" इति चेहाम्नाता एका ऋक् । एभिर्हुत्वा "अग्न आयूंषि" इत्यनयर्चान्नमभिमन्त्र्य महाव्याहृतिभिः प्राशनं कारयेत्; प्राशयेदित्यर्थः । मन्त्रपृथक्त्वात् किं [पृथक्] प्राशनं करोति आवापस्थाने प्राशनं भवति; प्राशयित्वा ततः सर्वप्रायश्चित्तादिशेषहोमं करोति । इह केन जुहोति? अनदीयेन । कथमिति चेत्, हुत्वा "अग्न आयूंषि" इति संबन्धात् आज्येनैव जुहोति । अदनीयेन जुहोतीति वचनाभावात् "जुहोतीत्युक्ते सर्पिः प्रतीयेत" इति वचनात् हुत्वा "अग्न आयूंषि" इति न होम्यादनीययोः सम्बन्धार्थः । किं तर्हि? होमप्राशनयोः कर्तृनियमार्थम् । यो होता स एव प्राशयेत् कुमारमिति; "समानकर्तृकयोः पूर्वकाले" इति विधानात् । यत्र होम्यमनदनीयं स्यात्, तत्र हुतशेषादिति वक्ष्यति । हुतशेषाद्धविः प्राश्य हुतशेषाद् ग्रहं गृहीत्वेत्येन[त्वेति । न] तथेह । तस्मादाज्यं हविरिति मन्यामहे ॥ १० ॥

१. All except IO add पुरुषत्रा
२. A. एता ऋचः
३. A omits इतराभ्यां
४. A. अयु
५. A adds एव
६. L omits द्वयोः...भवतीति
७. A omits किं
८. A. अदनीयेन
९. A. तथैव

शेषं माता प्राश्नीयात् ॥११॥

## अथ विंशः खण्डः

सप्तमेऽष्टमे वा मासि कर्णवेधनम् ॥१॥ यथा कुलधर्मं वा ॥२॥ तिष्यपुनर्वस्वोः श्रवणधनिष्ठयोर्वा ॥३॥ पूर्वोत्तरेषु वा ॥४॥ सर्वेषां यथानुकूलं वा ॥५॥ "अभि त्वा देव सवितः" इति तिसृभिस्त्रिमधुरस्य हुत्वा हिरण्मय्येतरया वा सूच्या "आश्रुत् कर्ण" इति दक्षिणं कर्णं विध्वा "उत त्वा बधिरं

शेषं......प्राश्नीयात् ॥ कुमारस्य माता प्राशनशेषं प्राश्नीयात् ॥ ११ ॥

## अथ विंशः खण्डः

सप्त........धनम् ॥ सप्तमे वाष्टमे वा मासि कर्णवेधनं कर्तव्यम् । अन्वर्थसंज्ञा। मासि इति छान्दसम् । मासे वर्तमान इत्यर्थः ॥ १ ॥

यथा......र्मं वा ॥ यथा कुलधर्ममिति कालानित्यत्वम् । केचित् सप्तमे मासि कुर्वन्ति, केचित् सप्तमे[अष्टमे] मासि कुर्वन्ति, केचित् कालान्तरे। यथा यस्य[1] कुलधर्मस्तथा करोति ॥ २ ॥

तिष्य......योर्वा ॥ तिष्यपुनर्वस्वोर्नक्षत्रयोर्वा श्रवणधनिष्ठयोर्वा। धनिष्ठेति श्रविष्ठानामाख्या ॥ ३ ॥

पूर्वोत्तरेषु[वा] ॥ पूर्वेषूत्तरेषु च[वा] । पूर्वफल्गुनी, उत्तरफल्गुनी, पूर्वाषाढा, उत्तराषाढा, पूर्वप्रोष्ठपदा, उत्तरप्रोष्ठपदा च[6] । पूर्वोत्तरेष्वित्युक्तान्येतानि[7] ॥ ४ ॥

सर्वे......लं वा ॥ सर्वेषां इति निर्धारणे षष्ठी। सर्वेषां नक्षत्राणां यन्नक्षत्रं कुमारस्यानुकूलं प्रशस्तमित्यर्थः; तस्मिन् वा। सर्वग्रहणम् अप्रकृतपरिग्रहार्थम्। इतरथा प्रकृतानामेव यथानुकूलमिति स्यात् ॥ ५ ॥

अभि......सव्यम् ॥ "अभि त्वा देव सवितः" इति तिसृभिरद्भिः त्रिमधुरस्य हुत्वा। हिरण्मय्या सूच्या इतरया वा। हिरण्मय्येत्यभिमतप्रक्षप्रदर्शनार्थम्।

१. A[1] omits कुल...सर्वेषां यथा
२. T adds वा
३. IO and A[1]. सूच्या वा
४. L. अथन-
५. A. अस्य
६. A omits च
७. A. क्त्वान्येतानि

वयम्" इति सव्यम् ॥६॥ रक्तकङ्कणं रक्तसूत्रं वा छिद्रयोः प्रतिनिदध्यात् "राकामहम्" इत्येतया ॥७॥ अथ ब्राह्मणान् त्रिमधुरेण स्वस्तीर्वाच्य ततोऽभिवादयीत ॥८॥

अनियमेऽहिरण्मय्यपि प्राप्नोति । त्रीणि मधुराणि द्रव्याणि समाहृतानि त्रिमधुरम् । अनियमेनोक्तत्वात् यानि कानि भवन्ति । अथवा यदेतदनन्तरमुक्तं दधिमधुघृतमिश्रमिति तत् त्रिमधुरम् । अस्मिन् पक्षे त्रिमधुरमिति बहुव्रीहिसमासः । त्रीणि मधुराणि यस्यास्ति तदिदं त्रिमधुरमिति । अम्लं दधि चेत्, तन्न मधुरम् । एतदुक्तं क्षारपाणिना हायनादिषु दध्याकारमधुरमित्युक्त्वा हायनादीनि मधुराणीति । अपि च प्रकृतप्रत्ययो ज्यायानप्रकृतप्रत्ययात्; नियमश्चानियमात् । अहोम्यं मधु इति चेत्, तन्न; वचनाद्धोम्यं स्यात् । नास्ति वचनस्यातिभारः । अपि च शास्त्रान्तरेष्वाभिचारकेषु कर्मसु मधु होम्यमाम्नातम्, कर्णवेधनमपि भाक्तमाभिचारकम् । तस्मादपीह मधु होम्यमेव । "आश्रुत्कर्ण" इति दक्षिणं कर्णं विध्वा "उत त्वा बधिरं वयम्" इति सव्यं कर्णं विध्यति । सव्यमित्यधिकारार्थमुक्तम्, न क्रमार्थम् ॥ ६ ॥

रक्त......तया ॥ वेधनानन्तरं रक्तसूत्रनिधानं कर्तव्यम् । रक्तकङ्कणं वा रक्तसूत्रं वा । "राकामहम्" इत्येतया छिद्रयोः प्रतिनिदध्यात् । रक्तकङ्कणं रक्तसूत्रमिति जातिशब्दौ । तस्मादेकवचनोपपत्तिः ॥ ७ ॥

अथ........यीत ॥ अथेत्यधिकारनिवृत्तौ । कृत्स्नं कर्म परिसमाप्य नावापस्थान इति ब्राह्मणान् त्रिमधुरेण स्वस्ति[स्तीः] वाच्य । स्वस्ति[स्तीः] वाच्येति प्रसिद्धग्रहणमुक्तम् । त्रिमधुरेणेति त्रिमधुरं दत्त्वेत्यर्थः । ततः स्वस्तिवाचनानन्तरं तान् ब्राह्मणान् कुमारोऽभिवादयेत् ॥ ८ ॥

१. All add here सन्दध्यात्

२. Both A and L read त्रीणि... होम्यमेव after वचनोपपत्तिः in the commentary on the next sūtra Its proper place seems to be here.

३. A. पाणिनाह्नायनामभिषु

४. A. बधिराः

५. L omits रक्त

६. A omits वा

७. L omits this word.

चूळाकर्म



## अथ एकविंशः खण्डः

संवत्सरे ब्राह्मणस्य चूळाकर्म ॥१॥ तृतीये वा वर्षे ॥२॥ पञ्चमे क्षत्रियस्य ॥३॥ सप्तमे वैश्यस्य ॥४॥ संवत्सरे वा सर्वेषाम् ॥५॥ अग्निमुपसमाधाय व्रीहियवानां तिलमाषाणामिति च पात्राणि पूरयित्वानळुहं गोमयं कुशभिंचिं च केशप्रतिग्रहणमादर्शं लोहक्षुरं नवनीतं चोत्तरत उपनिदधाति ॥६॥

## अथ एकविंशः खण्डः

संव......कर्म ॥ संवत्सरे पूर्णे ब्राह्मणस्य चूळाकर्म भवति, कर्तव्यम् । द्वादशे मासे पूर्णे करोति । तदा हि संवत्सरशब्दः कृतार्थो भवति । संवत्सर इति न वक्तव्यम् । वक्ष्यति हि "संवत्सरे वा सर्वेषाम्" इति । तेनैव संवत्सरप्रसिद्धिः । एवं तर्हि ब्राह्मणस्य कालानित्यत्वज्ञापनार्थम्, वक्ष्यमाणेष्वपि कालेषु ब्राह्मणस्य चूळाकर्म स्यात्, संवत्सरं तु विधाननित्या[त्वा]र्थमिति ॥ १ ॥

तृती ...वर्षे ॥ तृतीये वर्षे ब्रह्मणस्य चूळाकर्मेत्यधिकारः ॥ २ ॥

पञ्च......यस्य ॥ पञ्चमे वर्षे क्षत्रियस्य चूळाकर्म ॥ ३ ॥

सप्त......श्यस्य ॥ सप्तमे वर्षे वैश्यस्य चूळाकर्म ॥ ४ ॥

संव......र्वेषाम् ॥ सर्वेषां सर्वशब्दसामर्थ्यादन्तराळानामपि अधिकृतानां संवत्सरे चूळाकर्म स्यात् ॥ ५ ॥

अग्नि......धाति ॥ अग्निमुपसमाधाय । व्रीहियवानां तिलमाषाणामिति इतिशब्दः समुच्चयार्थः । चत्वारि पात्राणि पूरयित्वा आनळुहं गोमयं कुशभिंचिं च केशप्रतिग्रहणं कृत्वा । आदर्शं लोहक्षुरम् । क्षुरमित्येव वक्तव्यम् । तथा हि लोहक्षुरमेव भवति, प्रसिद्ध्या ; न हि वार्क्षः क्षुरो विद्यते । तथैव च मन्त्रे दृश्यते "क्षुरेण राजे" इति । लोहक्षुरमिति सुवर्णक्षुरमित्येवमर्थमुक्तम् । सुवर्णनामधेयेषु लोहशब्द आम्नातो निरुक्ते "लोहं कनकं काञ्चनम्" इति । व्यक्तं च भारवीये गृह्ये महापाठे—

१. A². सर्वे वा
२. T. Space is left out for writing पूर...नळु
३. T. चोत्तर उपरि दधाति
४. L adds आ
५. L omits चूळाकर्म स्यात्
६. L omits अग्नि...आदर्शं लोह-क्षुरम्
७. L. हारिवीये गृह्यमहा-

"सं पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमाः ।
पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातये" ॥

इत्युष्णास्वप्सु शीताः सिञ्चति[1] ॥७॥ "आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तत्ते अस्तु त्र्यायुषम्[2]" इति शीतोष्णाभिरद्भिर्दक्षिणं केशपक्षं त्रिरभ्यनक्ति ॥८॥ एवमेव नवनीतेन छित्वा ॥९॥ "ओषधे त्रायस्वैनम्" इति कुशतरुणमन्तर्निदधाति ॥१०॥ केशान् कुशतरुणं चादर्शेन स्पृष्ट्वा "तेजोऽसि स्वधितिष्टे पिता मैनं हिंसीः" इति लोहक्षुरमादत्ते ॥११॥

"सौवर्णशतपलः क्षुरः" इति । नवनीतं चेत्येतानि धान्यपात्रादीन्यग्नेरुत्तरत उपनिदधाति[4] । उपशब्दः समीपवाची ॥ ६ ॥

सं पृ......ञ्चति ॥ इहानादेशे[5] वेति व्याहृतयश्चतस्रः प्रधानाहुतयो भवन्ति । भूतिकर्मत्वादस्य ताः सर्वा हुत्वा । आज्याहुतित्वात्[6] स्विष्टकृतं हुत्वा सर्वप्रायश्चित्तात्[7] पुरस्तात् "सं पृच्यध्वम्" इत्यनेन मन्त्रेण उष्णास्वप्सु[8] शीताः सिञ्चति ॥ ७ ॥

आप उन्दन्तु......त्रिरभ्यनक्ति ॥ ततः ताभिः शीतोष्णाभिरद्भिः कुमारस्य दक्षिणकेशपक्षमादाय "आप उन्दन्तु" इत्यनेन मन्त्रेण त्रिरभ्यनक्ति ॥ ८ ॥

एवं......छित्वा ॥ केशाग्राणि छित्त्वाप्येवमेव नवनीतेन त्रिरभ्यनक्ति । एवमेवेति त्रित्वमेवानुकृष्यते, न मन्त्रः, लिङ्गविरोधात्, ऊहासम्भवाच्च समानविधाने ॥

ओष......धाति ॥ "ओषधे त्रायस्वैनम्" इति केशाग्रेषु कुशतरुणमन्तर्निदधाति । इहान्तश्शब्दो मध्यवाची ॥ १० ॥

केशान्......दत्ते ॥ ततस्तत्केशान् कुशतरुणं चादर्शेन तूष्णीमेव स्पृष्ट्वा ततः "तेजोऽसि" इत्यनेन मन्त्रेण लोहक्षुरमादत्ते, मन्त्रे केवलं क्षुरदर्शनात् ॥ ११ ॥

१. A² and T. सिञ्चतु
२. A² and T. त्रियायुषं
३. L omits this word.
४. L. उपदधाति
५. L. देशो वति
६. L omits आज्याहुतित्वात्
७. L. श्चित्तं
८. A omits उष्णासु ... इत्यनेन मन्त्रेण

"येनावपत् सविता क्षुरेण सोमस्य² राज्ञो वरुणस्य विद्वान् ।
येन धाता बृहस्पतेरिन्द्रस्य चावपच्छिरः ।
तेन ब्रह्माणो वपतेदमस्यायुष्मान् दीर्घायुरयमस्तु वीरोऽसौ ॥"

इति केशाग्राणि छिनत्ति कुशतरुणं च ॥१२॥ एवं द्वितीयम् ॥१३॥ एवं तृतीयम् ॥१४॥एवं द्विरुत्तरतः॥१५॥ निकक्षयोः षष्ठसप्तमे गोदानकर्मणि॥१६॥ एतदेव³ गोदानकर्म⁴ यच्चूळाकर्म षोळशे वर्षेऽष्टादशे वा ॥१७॥ तृतीये तु

येन......णं च ॥ ततस्तानि केशाग्राणि तच्च कुशतरुणम् "येनावपत्" इत्यनेन मन्त्रेण क्षुरेण छिनत्ति । असावित्यत्र प्रथमया नामनिर्देशं करोति ॥ १२ ॥

एवं......तीयम् ॥ "आप उन्दन्तु" । एवमेव द्वितीयमपि करोति ॥ १३ ॥

एवं तृतीयम् ॥ तथा तृतीयमपि करोति ॥ १४ ॥

एवं......रतः॥ तथैवोत्तरतश्च द्विः करोति । द्विरुत्तरत इत्येतावत्युच्यमाने एकस्मिन्नेव⁵ छेदनं द्विः स्यात्; तस्मात् पुनरप्येवमित्युक्तम् ॥ १५ ॥

निक......र्मणि ॥ गोदानकर्मणि निकक्षयोः षष्ठसप्तमे⁶ प्रवपने भवतः । पूर्वाणि च यथोक्तमेव ॥ १६ ॥

एतदेव......शे वा ॥ किन्तद् गोदानकर्म यस्मिन् सप्त प्रवपनानीति⁷ प्राप्त उच्यते । यच्चूळाकर्म एतदेव पुनः षोडशे वर्षे अष्टादशे वा कर्तव्यम् । गोदानस्य कर्म गोदानकर्मेति व्रतस्य गोदानस्यान्ते कर्तव्यम् । तस्योक्तो विशेषः ॥ १७॥

तृती......दाति ॥ तुशब्दोऽधिकारनिवृत्त्यर्थः⁸ । गोदानाधिकारो निवृत्तः । इदानीं तु चूडाकर्मविशेषो वक्ष्यत इति । तृतीये प्रवपने आचार्याय गां ददाति ॥

१. IO adds श्मश्रुग्रे
२. A¹ and A² omit सोमस्य
३. A² omits एतत्
४. IO. कर्मण्यचौळा
५. A. हि तस्मिन्नेव
६. L. सप्तमे वने भवतः
७. A. प्रवपनं त्विति
८. A. शब्दो विकार

प्रवपने[1] गां ददाति ॥१८॥ अहतं च वासो येनाच्छन्नो वपति[2] ॥१९॥ तूष्णीमावृताः कुमारीणाम् ॥२०॥ प्रागुदीच्यां दिश्यपां वा समीपे बह्वोषधिके देशे केशान् निखनन्ति ॥२१॥ नापिताय धान्यपात्राणि नापिताय धान्यपात्राणि ॥२२॥

इति कौषीतकगृह्ये प्रथमोऽध्यायः

अह......पति ॥ अहतं च वासो ददाति, येनाच्छन्नः कुमारो वपति । एतदेव ज्ञापकम्—अहतं वासः परिधाय कुमारो वापयत इति । स्वयं कर्तृनिर्देशः; तथा हि व्यवहारो लोके वापयतीति[3] । तथैव वा पाठः । अहतं वासः कर्मान्ते ददाति । न हि तत्तृतीये वपने दातुं शक्यम् ॥ १९ ॥

तूष्णीं......रीणाम् ॥ तूष्णीमावृतेत्यमन्त्रेण[4] प्रयोगेणेत्यर्थः । कुमारीणामपि चूळाकर्म कर्तव्यम् । इह यदुक्तम् "सं पृच्यध्वम्" इत्येवमादि तत् तूष्णीं क्रियते । होमकर्म समन्त्रकमेव क्रियेत, अन्यतः प्राप्तेः । अन्यतो हि प्रधाना हुतय प्राप्ताः, अन्यतश्च मन्त्रः । तस्माद्यथाप्राप्तमेव कर्म कृत्वा अन्यदमन्त्रकं करोति ॥ २० ॥

प्रागु......नन्ति ॥ प्रागुदीच्यां दिश्यपां समीपे वा अन्यत्र वा बह्वोषधिके देशे केशान्निखनन्ति । बहुवचननिर्देशात् परिकार्मिणो निखनन्ति अनियमेन ॥ २१ ॥

नापि......त्राणि ॥ यान्युक्तानि व्रीहियवानामिति पात्राणि तानि सधान्यानि नापिताय ददाति । इह नापितदर्शनात् कर्मानन्तरं केशांश्च कारयेत् । यथागोत्रं शिखाग्रहणं कृत्वा सर्वान्वापयेद्वा । तथाह्युक्तं शौनकेन ॥ २२ ॥

इति गृह्यविवरणे भवत्रातकृतौ प्रथमोऽध्यायः ॥

---

१. IO. प्लवने
२. T. भवति
३. L omits इति
४. A. तेत्यत्त मन्त्रेण

उपनयनम्

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

गर्भाष्टमेषु वर्षेषु[1] ब्राह्मणमुपनयीतैणेयेनाजिनेन ॥१॥ गर्भदशमेषु वा ॥२॥ गर्भैकादशेषु क्षत्रियं रौरवेण ॥३॥ गर्भद्वादशेषु वैश्यं गव्येन ॥४॥ आ षोडशाद् ब्राह्मणस्यापतिता सावित्री ॥५॥ आ द्वाविंशात् क्षत्रियस्य ॥६॥ आ चतुर्विंशाद्वैश्यस्य ॥७॥ काषायं वासो ब्राह्मणस्य ॥८॥ माञ्जिष्ठं क्षत्रियस्य ॥९॥

## प्रथमः खण्डः

गर्भा......नेन ॥ गर्भाष्टमेषु कुमारस्य ततो ब्राह्मणमुपनयीत ऐणेयेनाजिनेन । अजिनविशेष इहोच्यते ॥ १ ॥

गर्भ......षु वा ॥ उपनयीतेति वाक्यशेषानुषङ्गात् ॥ २ ॥

गर्भै......वेण ॥ गर्भैकादशेषु वर्षेषु क्षत्रियमुपनयीत रौरवेणाजिनेन ॥ ३ ॥

गर्भ......व्येन ॥ गर्भद्वादशेषु वर्षेषु वैश्यमुपनयीत गव्येनाजिनेन ॥ ४ ॥

आ षो .....वित्री ॥ आ षोडशाद्वर्षाद् ब्राह्मणस्य अपतिता सावित्री भवति । आ षोडशादुपनयनकाल इत्यर्थः । यद्येवं गर्भाष्टमप्रभृत्याषोळशाद्वर्षाद् ब्राह्मणस्योपनयनकाल इति वक्तव्यम् । तथा सति तुल्यः कालविधिः स्यात् । आपद्विकल्पो ह्या षोळशादिति । अथवा षोळशादपतितेति ब्रुवन् अत ऊर्ध्वं पततीत्येवमर्थमाह । तदुक्तम्—"अत ऊर्ध्वं पतिता सावित्री नैनानुपनयेत्" इति ॥ ५ ॥

आ द्वा.....यस्य ॥ अपतिता सावित्रीति वाक्यशेषः ॥ ६ ॥

आ च......श्यस्य ॥ स एव वाक्यशेषः ॥ ७ ॥

काषा......णस्य ॥ काषायं वासो ब्राह्मणस्य भवति ॥ ८ ॥

माञ्जि......यस्य ॥ वास इत्यधिकारः ॥ ९ ॥

१. IO. वर्षे  २. IO adds वा



K—10

हारिद्रं वैश्यस्य ॥१०॥ अहतेन वाससा सर्वे ॥११॥ मेखलिनः ॥१२॥ मौञ्जी मेखला ब्राह्मणस्य ॥१३॥ धनुर्ज्या क्षत्रियस्य ॥१४॥ ऊर्णासूत्रं वैश्यस्य ॥१५॥ तेषां दण्डाः ॥१६॥ पालाशो बैल्वो वा दण्डो ब्राह्मणस्य॥१७॥

हारिद्रं वैश्यस्य ॥ १० ॥

अह......सर्वे ॥ अहतेन वाससा आच्छन्नाः सर्वे उपनयेरन् । अहतेनेति कस्माद्विकृतनिर्देशः कृतः ? नन्वहतं वासः सर्वेषामिति वक्तव्यम् । विकृतनिर्देशो विकल्पवैषम्यज्ञापनार्थः । तस्मात् काषायाद्यसम्भवविषयता अहतस्य वाससः सिद्ध्यति । युक्तमेव चैतत् । "यदि वासांसि वसीरन्, रक्तमेव वसीरन्" इति स्मृतौ दर्शनात् । अथवा ऐणेयादिभिस्तृतीयानिर्दिष्टैरजिनैश्चोदनासामान्यार्थः । तेन अजिनानामपि वाससः कार्ये प्रसिद्धिः, वाससा तुल्यविधानात् । तथाह्युक्तं धर्मशास्त्रेषु "अजिनानि विधाय यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः" इति । अनन्तरस्यैवं वैश्यस्याहतविधानं मा भूदित्येवमर्थं सर्व इत्युक्तम् ॥ ११ ॥

मेखलिनः ॥ सर्व इत्यधिकारः । सर्वे मेखलिनो भवन्ति । नैतद्वक्तव्यम्, उत्तरत्र सविशेषविधानात् । एवं तर्हि विध्यन्तरमिदं विकल्पार्थम् । यथातथा मेखलिनो भवन्ति, न द्रव्यनियम इति । इदानीं द्रव्यनियमेनाभिमतपक्षो वक्ष्यते ॥ १२ ॥

मौञ्जी......णस्य ॥ तृणविशेषनिर्देशः ॥ १३ ॥

धनु......यस्य ॥ मेखलेत्यधिकारः ॥ १४ ॥

ऊर्णा......श्यस्य ॥ ऊर्णासूत्रमित्याविकं सूत्रम् ॥ १५ ॥

तेषां दण्डाः ॥ तेषां दण्डा भवन्ति । एतदपि न वक्तव्यम्, उत्तरत्र सविशेषविधानात् । एवं तर्हि एतदपि विध्यन्तरम्, ऋते वृक्षनियमं यथातथा दण्डा भवन्तीति । तदुक्तमापस्तम्बेन—"वार्क्षो दण्डः" इति । वर्णसंयोगेनैतदुपदिशन्तीति ॥ १६ ॥ इदानीं सविशेषमभिमतपक्षविधानम्

पाला......णस्य ॥ १७ ॥

१. T. हारीतं
२. L omits this word.
३. A omits एव
४. A. विधानात्

उपनयनम् । मेखलादिविधानम्



नैयग्रोधः खादिरो वा क्षत्रियस्य ॥१८॥ औदुम्बरो वैश्यस्य ॥१९॥ एवमेव होमार्थे ॥२०॥ घ्राणान्तिको ब्राह्मणस्य॥२१॥ ललाटान्तिकः क्षत्रियस्य॥२२॥ केशान्तिको वैश्यस्य ॥२३॥ सर्वे वा सर्वेषाम् ॥२४॥ येनाबन्धेनोपनयीत आचार्याधीनं तत् ॥२५॥ परिवाप्योपनयेत्तु ॥२६॥ आप्लाव्या-

नैय......यस्य ॥ १८ ॥

औदु......श्यस्य ॥ [३]दण्ड इत्यधिकारः ॥ १९ ॥

एव......मार्थे ॥ एवमेव [४]होमार्थेऽपि वृक्षनियमो भवति । होमार्थ इति इध्माद्यर्थे । अथवा ब्रह्मचारिणो होमार्थं सामान्यद्रव्यमुत्तरत्र वक्ष्यति अश्वत्थादि । इह विशेषनियमो विकल्पार्थः ॥ २० ॥

घ्राणा......णस्य ॥ इदानीं दण्डप्रमाणान्युच्यन्ते । घ्राणान्तिक इत्युपनेयस्य घ्राणसम इत्यर्थः ॥ २१ ॥

लला......यस्य ॥ ललाटान्तिक इति भ्रूसन्धेरूर्ध्वम् ॥ २२ ॥

केशा......श्यस्य ॥ ललाटदेशादूर्ध्वमिति केशान्तः ॥ २३ ॥

सर्वे वा सर्वेषाम् ॥ सर्वे प्रमाणविधयः सर्वेषां स्युर्वा ॥ २४ ॥

येना......नं तत् ॥ आबन्ध आभरणम् । येनाबन्धेनाभरणेनालङ्कृत उपनयीत तदाभरणमाचार्याधीनं भवति; आचार्याय तद्दद्यादित्यर्थः ॥ २५ ॥

परि......येत्तु ॥ तुशब्दोऽवधारणार्थः । परिवाप्यैवोपनेय इति व्रतादेशनेऽपि परिवापननिवृत्त्यर्थम् । ननु उपनयनातिदेशादेव सेत्स्यति । सिद्धस्य पुनर्वचनं नियमार्थम् । नियमश्चान्यनिवर्तकः ॥ २६ ॥

आप्ला......कृत्य ॥ आप्लाव्यालङ्कृत्येति विशेषस्नानालङ्करणयोः व्रतादेशने निवृत्त्यर्थं परिवापनावधारणम्; ननु[न तु] स्नानमपि तत्र निवृत्य[वर्त्यम्] । तेन खलु

१. All except T add अग्निमुपसमाधाय
२. All mss. of the text read उपनयित्वा
३. L omits दण्डः
४. L reads होमार्थेऽपि after the next word.

लङ्कृत्य ॥२७॥ अग्नय इन्द्रायादित्याय विश्वेभ्यो देवेभ्य इति हुत्वा जघनेनाग्निमुपतिष्ठतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरस्तिष्ठन् तिष्ठन्तमुपनयेत् ॥२८॥

"इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती न आगात् ।
प्राणापानाभ्यां बलमाविशन्ती सखा देवी सुभगा मेखलेयम् ॥"

विशेषस्नानं निवर्त्यते । इहाप्लाव्येति न वक्तव्यम् । परिवापने स्नानं प्रसिद्धवन्निर्देशात् । परिवापनानन्तरं स्नानं दर्शयति । एवं तर्हि अविशेषविधाने आनर्थक्याद्विशेषविधानं मङ्गल्यसङ्ख्यैर्घटैः मङ्गल्याभिरद्भिर्विशेषणं मङ्गल्यवदाप्लाव्येति । भूतिकर्मत्वाच्चोपनयनस्य तथा भवति ; तथैव च प्रसिद्धिर्लोके । तस्मादेव विशेषस्नानं व्रतादेशने निवर्त्यते । सामान्यस्नानं शुद्ध्यर्थं शास्त्रान्तरविहितं निवर्त्यते । इह परिवाप्यं विशेषेणाप्यलङ्कृत्योपनेयः । व्रतादेशने तु परिवाप्यैवेति नियमार्थस्तुशब्दः । तत्रापि शुद्ध्यर्थं सामान्यस्नानं भवत्येव ॥ २७ ॥

अग्न......नयेत् ॥ इतिशब्दः समुच्चयार्थः । पुरस्ताज्याहुतीर्हुत्वा एताश्चतस्र आहुतीर्हुत्वा उपरिष्टाज्याहुतीर्हुत्वा स्विष्टकृत ऊर्ध्वं जघनेनाग्निमुपतिष्ठतः । कथमिति चेत् प्राङ्मुख आचार्यस्तिष्ठति, प्रत्यङ्मुख इतरः । इतर इत्युपनेयः । तिष्ठन्नाचार्यस्तिष्ठन्तमितरमुपनयेत् । जघनेनाग्निमुपतिष्ठत इत्येव स्थाने सिद्धे पुनस्तिष्ठन् तिष्ठन्तमित्युभयोः स्थानविधानमेवमेव । तिष्ठन्निति प्राङ्मुखप्रत्यङ्मुखत्वनियमार्थम् । पर्यावृत्येत्यत्रापि प्रत्यङ्मुखो भवेद् इति संशयनिवृत्त्यर्थम् ॥ २८ ॥

इय......रेकः ॥ "इयं दुरुक्तम्" इत्यनेन मन्त्रेण मेखलां त्रिवृतां त्रिः परिवृत्य त्रिवृतैवैको ग्रन्थिः कर्तव्यः ॥ २९ ॥

१. IO omits इति
२. A. निवृत्यते
३. L. वाप्यते
४. L. उपनयः
५. L. विद्य
६. A adds उक्तम्

उपनयन मन्त्राद्विधानम्



इति त्रिर्मेखलां परिवृत्य त्रिवृतात्रिवृतेनैकग्रन्थिरेकः ॥२९॥ त्रयोऽपि वा ॥ ३०॥ "यज्ञस्योपवीतेनोपनयामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय सर्वेषां वेदानामाधिपत्याय यशसे ब्रह्मवर्चसाय त्वा" इत्युपवीतेन॥३१॥उपनह्य दक्षिणं बाहुमुद्धृत्य शिर उपधाय वामेंऽसे प्रतिष्ठापयति ॥३२॥ एवं यज्ञोपवीती॥३३॥ विपरीतं पित्र्ये ॥३४॥ "उच्छिष्टम्" इत्यजिनेन च ॥३५॥

त्रयोऽपि वा ॥ त्रयोऽपि वा त्रिवृतो ग्रन्थयः कार्याः ॥ ३० ॥

यज्ञ......तेन ॥ "यज्ञस्योपवीतेन" इत्यनेन मन्त्रेण उपवीतेनोपनयेत् । उपवीतविशेषः शास्त्रान्तरविहितः । त्रिवृद्यज्ञोपवीतमेवेति तन्त्वादिनियमेन सूत्रम् । अस्माकमप्युपवीतं रज्जुरित्येतावद्दृश्यते, शास्त्रे उपवीतिन इति च । "यद्येकवासा यज्ञोपवीतं कर्णे कृत्वा" इति च ॥ ३१ ॥ कथमुपनयेत् इति चेत्

उप......यति ॥ तदुपवीतमुपनह्य उपनेयस्य दक्षिणं बाहुमुद्धृत्य शिरश्च दक्षिणतो निधाय वामेंऽसे प्रतिष्ठापयति ॥ ३२ ॥

एवं......वीति ॥ एवं यज्ञोपवीती स्यात् । इह लक्षणतस्सिद्धं पुरस्तादुक्तम् "यज्ञोपवीती देवकर्माणि करोति" इत्येवमादिषु ॥ ३३ ॥

विप......पित्र्ये ॥ एतदेव विपरीतं पित्र्ये । यदुक्तं तद्भवति सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति, एवं कृते प्राचीनावीती भवतीत्यर्थः । तद्धि पित्र्य उक्तम् ॥ ३४ ॥

उच्छि......न च ॥ "उच्छिष्टम्" इत्यनयर्चा अजिनेन च यज्ञोपवीतवदुपनयेत् ॥ ३५ ॥

१. A². त्वामिति
२. L omits the portion within quotations.
३. L. उपनयेदिति चेदुप-
४. L. तीत्येव कर्माणि

## अथ द्वितीयः खण्डः

अद्भिरञ्जलिं पूरयित्वाथैनमाह "को नामासि" इति॥१॥ "असावहं भोः" इतीतरः ॥२॥ "समार्षः" इत्याचार्यः ॥३॥ "समार्षोऽहं भोः" इतीतरः ॥४॥ "ब्रह्मचारी भव" इत्याचार्यः ॥५॥ "ब्रह्मचारी भवानि" इतीतरः ॥६॥ "भूर्भुवःस्वः" इत्यञ्जलावञ्जलींस्त्रीनासिच्य दक्षिणोत्तराभ्यां पाणिभ्यां पाणी संगृह्य जपति "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो

## अथ द्वितीयः खण्डः

अद्भि......सीति ॥ आचार्योऽद्भिरात्मनोऽञ्जलिं पूरयित्वाऽथैनमाह "को नामासि" इति । अथैनमित्यथशब्दोऽधिकारनिवृत्त्यर्थत्वादाचार्यस्याञ्जलिरिति संशयनिवृत्तिं करोति ॥ १ ॥

असा......तरः ॥ अथैवमुक्तः 'असावहं भोः'......ह[इति प्रत्याह । अहं] असावित्यत्र प्रथमया आत्मनो नाम निर्दिशति ॥ २ ॥

समा......चार्यः ॥ ततः समार्ष इत्याचार्य आह ॥ ३ ॥

समा......तरः ॥ समार्षोऽहं भोः इतीतर आह ॥ ४॥

ब्रह्म......चार्यः ॥ तत आचार्यो ब्रह्मचारी भव इत्याह ॥ ५ ॥

ब्रह्म......तरः ॥ इतरो ब्रह्मचारी भवानि इत्याह ॥ ६ ॥

भूर्भु......विति ॥ ततं आचार्यः प्रकृतानञ्जलींस्त्रीनस्याञ्जलावासिञ्चति "भूर्भुवस्स्वः" इति । अञ्जलीनित्यञ्जलिगता आप उच्यन्ते, आधार्ये आधारवदुपचारात्, यथा "मञ्चाः क्रोशन्ति" इति मञ्चस्थेषु पुरुषेषु क्रोशत्सु । त्रीनिति द्रव्यपरत्वनिर्देशो मन्त्रावृत्त्यर्थः । त्रिरासिच्येत्युच्यमाने च सकृदेव मन्त्र उच्यते । तस्माद्द्रव्यपरनिर्देशादिह मन्त्रावृत्तिः । ततो दक्षिणोत्तराभ्यां पाणिभ्यामस्य पाणी सङ्गृह्य

१. T. Space is left out for writing ब्रह्मचारी

२. IO, A[1] and A[2] omit इति

३. L omits अथैनमिति

४. A omits अथै ... समा ... तरः (fourth sūtra) ॥

५. A. तत्र

उपनयने मेखलादिविधानम्



हस्ताभ्यामुपनयाम्यसौ" इति ॥७॥ "गणानां त्वा" इति गणकामम् ॥८॥ "आगन्तामरिषण्यत" इति यौधम् ॥९॥ महाव्याहृतिभिर्व्याधितम् ॥१०॥ "भगस्ते हस्तमग्रभीत् पूषा ते हस्तमग्रभीत् सविता ते हस्तमग्रभीदर्यमा ते हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीन्मित्रस्त्वमसि धर्मणाग्निराचार्यस्तवासावहं चोभौ। अग्न एतं ते ब्रह्मचारिणं परिददामि इन्द्र एतं ते ब्रह्मचारिणं परिददाम्यादित्य एतं ते ब्रह्मचारिणं परिददामि विश्वे देवा एतं वो ब्रह्मचारिणं परिददामि दीर्घायुत्वाय शतशारदाय सर्वेषां वेदानामाधिपत्याय सुश्लोकाय स्वस्तये" इति ॥११॥ "ऐन्द्रीमावृतमावर्तस्वादित्यस्यावृतमन्वावर्तस्व" इति प्रदक्षिणं पर्यावृत्य[२] दक्षिणेन प्रादेशेन दक्षिणमंसमन्वारभ्य[३]

जपति "देवस्य त्वा" इति। असाविति मन्त्रमध्य इतिकरणनिर्देशस्तदन्तस्य मन्त्रावयवस्य साम्यनिर्देशार्थः। संबुद्ध्या नामनिर्देशः कार्यः ॥ ७ ॥

गणा......कामम् ॥ "गणानां त्वा" इत्यनयर्चा गणकाममुपनयेत् "देवस्य त्वा" इति ॥ ८ ॥

आग......योधम् ॥ उपनयेदित्येवानुषङ्गः ॥ ९ ॥

महा......धितम् ॥ उपनयेदित्येवानुषङ्गः ॥ १० ॥

भग......इति ॥ नित्योऽयं मन्त्रशेषः, काम्ये नैमित्तिकपक्षेऽपि "भगस्ते हस्तम्" इति। असावहं चोभौ इत्यत्राचार्य आत्मनो नाम प्रथमया निर्दिशेत्। शिष्यस्येति चेत्[४] निर्दिष्टः उपनयाम्यसावित्यत्र नाम्ना। न ह्येकस्मिन् मन्त्रे द्वितीयनामनिर्देशकार्यमस्ति ॥ ११ ॥

ऐन्द्री......पति ॥ अथ विमुच्य पाणी "ऐन्द्रीम्" इत्यनेन मन्त्रेण प्रदक्षिणं पर्यावृत्य प्रत्यङ्मुखस्थितस्य दक्षिणमंसं दक्षिणेन प्रादेशेनान्वारभ्य जपति ॥ १२ ॥

१. IO and A[1]. ते
२. IO, A[1], A[2] and T. परिक्रम्य
३. T. मंसं समारभ्य
४. L omits चेन्निर्दिष्टः

जपति ॥१२॥ "भूर्भुवःस्वररिष्यतस्ते हृदयस्य प्रियो भूयासं मात्वमध्यवच्छि-त्वासौ" इति ॥१३॥ तूष्णीमपसव्यं पर्यावृत्याथास्योर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति "मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यं कामस्य ब्रह्मचार्यस्यसौ" इति ॥१४॥ तेनैव मन्त्रेण तथैव पर्यावृत्य दक्षिणेन प्रादेशेन दक्षिणं बाहु-मन्वारभ्याह "ब्रह्मचार्यसि समिधमाधेहि अपोऽशान कर्म कुरु दिवा मा सुषुप्थाः वाचं यच्छा समिदाधानात्"[5] ॥१५॥ "एषा ते अग्ने समित्" इत्यभ्यादधाति समिधम् ॥१६॥ तूष्णीं वा ॥१७॥

भूर्भुवः......विति ॥ भूर्भुवस्वः इत्यसावित्यत्र सम्बुद्ध्या तस्य नाम निर्दिशेत् ॥ १३ ॥

तूष्णीं......विति ॥ तूष्णीमपसव्यं पर्यावृत्त्याथास्य हृदये आचार्य आत्मनः पाणिमूर्ध्वाङ्गुलिं निधाय जपति । "मम व्रते" इति । सम्बुद्ध्या तस्य नाम निर्दिशेत् । अस्य पाणिमाचार्यस्य हृदय इति कस्मान्न भवति? इति चेत्, "मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु" इत्युभयोः सम्बन्धदर्शनान्न भवति । तस्मादस्य हृदये आचार्य आत्मनः पाणिमूर्ध्वाङ्गुलिं निधाय जपति ॥ १४ ॥

तेनै......धानात् ॥ तेनैव "ऐन्द्रीमावृतम्" इत्यनेन मन्त्रेण तथैव प्रदक्षिणं पर्यावृत्य यथास्य प्रत्यङ्मुखस्य दक्षिणं बाहुं दक्षिणेन प्रादेशेनान्वारभ्याह— "ब्रह्मचार्यसि" इत्या समिदाधानात् इत्येवमन्तं भाषया चाह पदार्थावबोधनार्थम् । अवगतपदार्थो हि यथोक्तं करोति, नानवगतपदार्थः ॥ १५ ॥

एषा......मिधम् ॥ स एवमुक्तः "एषा ते अग्ने समित्" इत्यनेन मन्त्रेण स्वाहाकारान्तेन समिधमभ्यादधाति । स्वाहाकारान्ते "समित्सु च" इति पुरस्ता-दुक्तत्वात् ॥ १६ ॥

तूष्णीं वा ॥ तूष्णीं वाभ्यादधाति समिधम् ॥ १७ ॥

१. IO and A[1]. कुल्पाणि
२. IO and A[1]. ददामि
३. T and A[2] add इति
४. A omits इति...मम व्रते
५. A omits स्वाहा...दधाति

उपनयने सावित्र्युपदेशः



## अथ तृतीयः खण्डः

संवत्सरे सावित्रीमन्वाह त्रिरात्रेऽन्वक्षं वा ॥१॥ गायत्रीं ब्राह्मणायानुब्रूयात् ॥२॥ त्रिष्टुभं क्षत्रियाय ॥३॥ जगतीं वैश्याय ॥४॥ सावित्रीं त्वेव ॥५॥ उत्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ॥६॥

## अथ तृतीयः खण्डः

संव......क्षं वा ॥ संवत्सरे पूर्णे सावित्रीमन्वाह । त्रिरात्रे वा अन्वक्षं वा । अन्वक्षं इति तदनन्तरमित्यर्थः । सविता अस्या ऋचो[2] देवता इति सावित्री । देवतानियमः सर्वेषां समानम् ॥ १ ॥

गाय......ब्रूयात् ॥ इदानीं विशेषेण छन्दोनियम उच्यते । गायत्रीं ब्राह्मणायानुब्रूयात् ॥ २ ॥

त्रिष्टु......याय ॥ अनुब्रूयादित्यधिकारः ॥ ३ ॥

जग......श्याय ॥ जगतीं वैश्यायानुब्रूयात् ॥ ४ ॥

सावित्रीं त्वेव ॥ सावित्रीमेव त्वनुब्रूयात् । किमर्थमिदमुच्यते? ननु "सावित्रीमन्वाह" इत्येव देवतानियमः सिद्धः, सर्वेषामविशेषवचनात्; देवतानियमस्तु सिद्धः । इदं पुनर्विकल्पार्थं संग्रहार्थं चो[1]च्यते । "तत्सवितुर्वरेण्यम्" इत्येव स्यात्, नान्या तद्देवत्या इति वक्ष्यमाणा सावित्री इति । सैव वा सर्वेषां[3] स्यात्, न त्रिष्टुब्जगत्यौ इति । एवशब्दोऽभिमतपक्षावधारणार्थः । तुशब्दो विकल्पार्थः, पक्षव्यावर्तको वा । तस्मादस्मिन् शास्त्रे यत्र सावित्री वक्ष्यते सन्ध्योपासनादिषु, तत्र "तत्सवितुर्वरेण्यम्" इत्येव स्यात्, नान्या तद्देवत्या ॥ ५ ॥

उत्त......तरः ॥ अग्निमुत्तरेण प्राङ्मुख आचार्यः प्रत्यङ्मुख इतर उपविशतः ॥ ६ ॥

१. All except T. च

२. L omits ऋचः

३. L omits सर्वेषां

'वैश्वामित्रीं गायत्रीं सावित्रीं भो अनुब्रूहि' इतीतरः ॥७॥ "तत्सवितुर्वरेण्यम्" इत्येतां सप्रणवां सव्याहृतीं पच्छोऽर्धर्चशोऽनवानम् ॥८॥ यदि त्रिरात्रे संवत्सरे वा भैक्षाचरणान्तं कृत्वोपासीत ॥९॥ "आपो नाम स्थ शिवा नाम स्थौजा नाम स्थाजरा नाम स्थामृता नाम स्थाभया नाम स्थ तासां वोऽशीय

वैश्वा......तरः ॥ अथ आचार्यमितर आह—'वैश्वामित्रीं गायत्रीं सावित्रीं भो अनुब्रूहि' इति। आचार्य एव तथा तं वाचयति; इतरथा न ह्यसावभिजानाति एवं वक्तव्यमिति। अन्यत्रापि एवंविधेष्वेवं न्याय्यम् ॥ ७ ॥

तत्स......वानम् ॥ तत आचार्यः "तत्सवितुर्वरेण्यम्" इत्येतां सप्रणवां सव्याहृतीं पच्छोऽर्धर्चशोऽनवानं च त्रिराह। प्रणवव्याहृतिषु सावित्रीणामयं त्रिरभ्यासश्चोद्यते पच्छोऽर्धर्चशोऽनवानमिति। त्रयाणामनुवचनगुणानामर्थतः सावित्र्यैव सम्बन्धो भवति। प्रणवव्याहृतिषु पादार्धर्चाभावात् ततः प्रणुत्य व्याहृतीरुक्त्वा सावित्रीं पच्छोऽनुब्रूयात्। पुनरप्येवं सावित्रीमर्धर्चशोऽनुब्रूयात्। पुनरप्येवं सावित्रीमनवानमनुब्रूयात्। न च शिष्यं वाचयेत् 'गायत्रीं सावित्रीं भो अनुब्रूहि' इति, वचनात्। एतदन्वक्षे त्रिरात्रे संवत्सरे वा विशेषेणोत्तरत्र वक्ष्यति। अथेतरयोः पक्षयोरत्र सावित्र्यनुवचनात् प्रागेव कृत्वा कालमकाङ्क्षत इति चेन्न ॥८॥

यदि......सीत ॥ त्रिरात्रे संवत्सरे वा सावित्र्यनुवचनं यदि स्यात्, भैक्षचरणान्तं यथा वक्ष्यति तथा कृत्वा तमग्निमुपासीत ॥ ९ ॥

आपो......च्छति ॥ "आपो नाम स्थ" इत्यनेन मन्त्रेण एनं त्रिरप आचमय्य "स्वस्ति नो मिमीताम्" इति पञ्चर्चेनास्मै दण्डं प्रयच्छति। सर्वासामृचामन्ते प्रयच्छति, एकवच्चोदितत्वात्। "आपो नाम स्थ" इति मन्त्रं शिष्योऽनुब्रूयात्। "तासां वोऽशीय" इत्युत्तमपुरुषदर्शनात् "सुमतौ मा धत्त" इति फलसम्बन्धदर्शनाच्च त्रिरपि मन्त्रोऽभ्यावर्तते। तेन हि केवलं वा कर्मकरणं वा द्रव्यं संस्कृत्य कर्मणा समवैति। एवंविधानां मन्त्राणामावृत्तिरिति पुरस्तादप्युक्तम् ॥ १० ॥

१. All read इत्येकां
२. IO and A[1] read अभया नाम स्थामृता नाम स्थ
३. A. व्याहृतिसावि-

उपनयन सावित्र्युपदेशः



सुमतौ मा धत्त" इत्येनं त्रिरप आचमय्य "स्वस्तिनो मिमीताम्" इति पञ्चर्चेन दण्डं प्रयच्छति ॥१०॥ "दृतेरिव ते" इति कमण्डलुम् ॥११॥ वरो दक्षिणा ॥१२॥ "तच्चक्षुः" इत्यादित्यमुपस्थाय प्रदक्षिणं परिक्रम्य भिक्षते ग्रामम् ॥१३॥ मातरं त्वेव प्रथमाम् ॥१४॥ या वैनं न प्रत्याचक्षीत ॥१५॥ आचार्याय भैक्षं वेदयीत ॥१६॥ अनुज्ञातो गुरुणा भुञ्जीत ॥१७॥ अहरहः समिदाधानं

दृते......ण्डलुम् ॥ "दृतेरिव ते" इत्यनयर्चा कमण्डलुमस्मै प्रयच्छति। सुपूर्णस्येति मन्त्रलिङ्गादद्भिरभिपूर्य प्रयच्छतीति चेत्, तन्न; दृतेरिव सुपूर्णं ते सख्यमस्तु इति हि पूर्णशब्दस्योपमाविशेषणत्वलिङ्गम्। ते सुपूर्णस्येति कमण्डलुविशेषणपक्षेऽपि सखाविशेषणत्व एवंविधो भूत्वा सखा भवेति प्रदानकाले रिक्ततां द्योतयति ॥ ११ ॥

वरो दक्षिणा ॥ आचार्याय वरं ददाति ॥ १२ ॥

तच्च......ग्रामम् ॥ "तच्चक्षुः" इत्यादित्यमुपस्थाय प्रदक्षिणं परिक्रम्य पश्चाद् ग्रामं भिक्षते ॥ १३ ॥

मात......थमाम् ॥ मातरं त्वेव प्रथमां भिक्षते ॥ १४ ॥

या वै...क्षीत ॥ या वैनं भिक्षां न प्रत्याचक्षीत तामन्यां वा प्रथमं भिक्षते ॥१५॥

आचा......यीत ॥ आचार्याय भैक्षं लब्धं वेदयीत, प्रयच्छेदित्यर्थः ॥ १६ ॥

अनु......ञ्जीत ॥ आचार्येणानुज्ञातः 'भुङ्क्ष्व' इत्युक्तो भुञ्जीत; नाननुज्ञातो भुञ्जीत। अत्र प्रायश्चित्तादिहोमशेषं करोति ॥ १७ ॥

अह......त्यानि ॥ एतानि ब्रह्मचारिणो नित्यानि। अहरहरिति न वक्तव्यम्, नित्यवचनात्। अहरहरिति समिदाधानविशेषणार्थमुक्तम्। अहरहः सायंप्रातरिति वक्ष्यते। तत्समिदाधानं नित्यम्। न प्रागुपनयन उक्तमिति ब्रह्मचारिग्रहणमन्यनिवृत्त्यर्थम् ॥ १८ ॥

१. IO. इत्यथैनं
२. IO omits प्रदक्षिणं परिक्रम्य
३. IO, A[1] and A[2]. यावैरम्यत्
४. L. पूर्णस्येति
५. A. भुङ्क्तेत्युक्तं

भैक्षाचरणमधःशय्या गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि ॥१८॥ तदपि श्लोकः—

क्षेत्रं हिरण्यं गां वासश्छत्रोपानह्मन्ततः[1] ।
धान्यमन्नमथो शाकं[2] गुरवे प्रीतिमावहेत् ॥

इति ॥

अथ चतुर्थः खण्डः

अथानुवचनस्य ॥१॥ अग्नेरुत्तरत उपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ॥२॥ अभिवाद्य पादावाचार्यस्य च[3] पाणी प्रक्षाल्य मूले कुश-

तद......हेदिति ॥ तत्र श्लोकोऽपि भवति । आचार्याय भैक्षं वेदयीत इत्यस्मिन्नर्थे आनुपश्यं[नुवेश्यं] श्लोकोदाहरणमेतत्—

"क्षेत्रं हिरण्यं गां वासश्छत्रोपानहमन्ततः ।
धान्यमन्नमथो शाकम्...... ..... ॥"

गुरवे ददातीत्यर्थः । छत्रोपानहमिति द्वन्द्वैकवद्भावः । अन्तत इत्यन्यजातीयमपि ददाति । एतदुक्तं भवति—प्रीतिमावहेति श्लोकशेषम्—'प्रीतिमावह' इत्युक्त्वा ददातीत्यर्थः ॥ १९ ॥

अथ चतुर्थः खण्डः

अथा......नस्य ॥ अथ त्रिरात्रसंवत्सरयोः साविञ्यनुवचनस्य विधानं वक्ष्यते । शिष्योऽप्येवं ब्रूयात् । वाचयति तस्माद्वाचनमिति साविञ्यध्यापनविधानमित्यर्थः ॥ १ ॥

अग्ने......तरः ॥ अग्नेरुत्तरतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरो[4] भूत्वा उपविशतः । भैक्षचरणान्तं कृत्वोपासीतेति । विद्यते ह्युपनयनाग्निः । तस्याग्नेरुत्तरत इत्यर्थः ॥ २ ॥

अभि......ह्णाति । उपनयनात् प्रागाचार्यस्य पादावभिवाद्य प्रत्यङ्मुख उपविशति शिष्यः । ततः पाणी प्रक्षाल्य कांश्चित्कुशतरुणान् मूले गृह्णाति ॥ ३ ॥

१. T Space is left out for writing न्ततः
२. IO, A¹. and A² पाकं
३. IO, A¹ and T omit च
४. L. इतरतः

तरुणान् गृह्णाति ॥३॥ तान् सव्येनाचार्योऽग्रे संगृह्य दक्षिणेनाद्भिः परिषिञ्चति ॥४॥ 'अधीहि भोः' इत्युक्त्वा आचार्यः ॥५॥ 'ओंपूर्वा व्याहृतयः सावित्रीं भो अनुब्रूहि' इतीतरः ॥६॥ '[1]ओंपूर्वा व्याहृतयः सावित्रींस्तेऽनुब्रवीमि' इत्याचार्यः ॥७॥ 'ऋषीन् भो अनुब्रूहि' इतीतरः ॥८॥ 'ऋषींस्तेऽनुब्रवीमि' इत्याचार्यः ॥९॥ 'देवता भो अनुब्रूहि' इतीतरः ॥१०॥

तान्......षिञ्चति ॥ तान् कुशतरुणान् सव्येन पाणिना आचार्योऽग्रे सङ्गृह्य दक्षिणेन पाणिनाद्भिः परिषिञ्चति ॥ ४ ॥

अधीहि......चार्यः ॥ 'अधीहि भोः' इत्युक्त्वा आचार्य आस्ते। उक्त्वेति कालवाची। यदा आचार्यः 'अधीहि भोः' इत्याह तदा ॥ ५ ॥

ओंपू......तरः ॥ 'ओम्पूर्वा व्याहृतयः सावित्रीं ते अनुब्रवीमि' इत्याचार्य आह ॥ ६ ॥

[2]ओम्......चार्यः ॥ ततो वैश्वामित्रीः गायत्रीं सावित्रीं भो अनुब्रूहि इति इतर आह। एवमुक्त आचार्यः प्रणवव्याहृ[3]तयः सावित्रीं यथोपनयन उक्तम्, तथा स्वयमेव त्रिरनूच्य ततो यावदवधार्य वक्तुं शक्नुयात् तावत्तावत् प्रवक्त्र्याध्यापयति। 'ऋषीन् भो अनुब्रूहि' इत्यादि तु वेदानुवचनस्यादौ भवति, [4]न सावित्र्यनुवचनस्य। एक एव हि सावित्र्या ऋषिर्विश्वामित्रः, एकैव देवता सविता, एकमेव छन्दो गायत्री। ततोऽनुवचनसामान्यादुभयत्राप्रसक्तमपि तदृषिदेवताछन्दो[5]बहुत्वायोगात्तावद्योगिनो वेदस्यैवानुवचनेऽर्थतः संयोक्ष्यति ॥ ७ ॥

ऋषीन्......तरः ॥ अथ 'ऋषीन् भो अनुब्रूहि' इतीतर आह ॥ ८ ॥

ऋषी......चार्यः ॥ ततः 'ऋषींस्तेऽनुब्रवीमि' इत्याचार्य आह ॥ ९ ॥

देव......तरः ॥ [6]ततः 'देवता भो अनुब्रूहि' इतीतर आह ॥ १० ॥

१. IO omits ओंपूर्वा व्याहृतयः
२. A omits this sūtra.
३. A. इतिसावित्रीं
४. L omits न
५. A. छन्दोदेवताबहु
६. L adds आह

'देवतास्तेऽनुब्रवीमि' इत्याचार्यः ॥११॥ 'छन्दांसि भो अनुब्रूहि' इतीतरः ॥१२॥ 'छन्दांसि तेऽनुब्रवीमि' इत्याचार्यः ॥१३॥ 'श्रद्धामेधे भो अनुब्रूहि' इतीतरः ॥१४॥ 'श्रद्धामेधे तेऽनुब्रवीमि' इत्याचार्यः ॥१५॥ येन येनर्षिणा यो यो यद्देवत्यो यच्छन्दा वा स्यात् तथा तथा तं तं मन्त्रमनुब्रूयात् ॥१६॥ अपि वाविन्दन् ऋषिदैवतछन्दांस्येवमेवैकैकमृषि-मनुवाकं वानुब्रूयात् ॥१७॥ क्षुद्रसूक्तेष्वनुवाकं वानुब्रूयात् ॥१८॥ यावद्वा

देव......चार्यः ॥ ततः 'देवतास्ते अनुब्रवीमि' इत्याचार्य आह ॥ ११ ॥

छन्दां......तरः ॥ 'छन्दांसि भो अनुब्रूहि' इतीतर आह ॥ १२ ॥

छन्दां......चार्यः ॥ ततः 'छन्दांसि ते अनुब्रवीमि' इत्याचार्य आह ॥ १३ ॥

श्रद्धा......तरः ॥ 'श्रद्धामेधे भो अनुब्रूहि' इतीतर आह ॥ १४ ॥

श्रद्धा......चार्यः ॥ ततः 'श्रद्धामेधे ते अनुब्रवीमि' इत्याचार्य आह ॥ १५ ॥

येन......ब्रूयात् ॥ इदानीं लक्षणमुच्यते — येन येनर्षिणा यो यो मन्त्रो दृष्टो यद्देवत्यो यच्छन्दा वा स्यात्—वाशब्दो विधिसमुच्चयार्थः, विध्यनुकर्षणार्थो वा—तथा तथा तं मन्त्रमनुब्रूयात् । तथा तथा सर्वान् मन्त्रान् इति च सिद्धे तं तं इत्यप्रत्यक्षनिर्देशोऽध्यापनकार्यमाह । तं तं मन्त्रं तथा तथा अनुब्रूयात् । इत-रस्तु मन्त्रामध्यापनकाले यथोक्तमनुब्रूयात् ॥ १६ ॥

अपि......ब्रूयात् ॥ अपि च ऋषिदैवतछन्दांसि अविन्दन्नित्यजानन्नित्यर्थः । आचार्य एवमेव । एकैकमृषिमित्यार्षम्, एकैकमनुवाकमनुब्रूयात् सर्वान् मन्त्रान् । एकैकमिति वीप्सा मण्डलापेक्षा । एकैकस्मिन् मण्डले एकैकमृषिमनुवाकं वेति॥१७॥

क्षुद्र......कं वा[नुब्रूयात्] ॥ तथापि क्षुद्रसूक्तेष्वनुवाकमेवानुब्रूयात् । नियमार्थमिदमार्षमिति । क्षुद्रसूक्तेष्वित्युत्तमे मण्डल इत्यर्थः ॥ १८ ॥

याव......न्येत ॥ एकैकस्मिन्मण्डले यावद्वा गुरुर्मन्येत । मन्येतेति जानीत इत्यर्थः । तावद्वा तथानुब्रूयात् ॥ १९ ॥

१. IO and A[1] omit यावद्वा गुरु-र्मन्येत

२. L adds अथ

उपनयन सावित्र्यनुवचनम्



गुरुर्मन्येत ॥१९॥ आद्योत्तमे वानुब्रूयादृषेरनुवाकस्य ॥२०॥ आद्युत्तमा इत्येषा प्रकृतिरिति ॥२१॥ कामं सूक्तादावाचार्यः ॥२२॥ इत्येतदृषिस्वाध्यायेन

आद्यो......कस्य ॥ ऋषेर्वा अनुवाकस्य वा आद्योत्तमे ऋचौ तथानुब्रूयात् ॥

आद्यु......रिति ॥ आद्युत्तमवचने हेतुमाह । आदितः प्रभृत्या उत्तमादृषैव प्रकृतिरिति । अथवा लौकिके कर्मण्यादितश्चान्ततश्चतस्माद्धेतोराद्युत्तमवचनम् ॥२१॥

काम......चार्यः ॥ यस्य सूक्तस्य कामो भवति ऋषो वा तस्य कामं चानुब्रूयात् इत्याचार्य आचष्टे ॥ २२ ॥

इत्ये......ख्यातम् ॥ इत्येतद्विधानमृषिस्वाध्याये व्याख्यातम् । ऋषिस्वाध्याय इति ब्रह्मयज्ञ इत्यर्थः । फलार्थत्वान्नित्यस्वाध्याय उच्यते । नित्यस्वाध्याय इति ब्रह्मयज्ञं वक्ष्यति "आ सूक्तादानुवाकाद्वा ब्रह्मयज्ञो विधीयते ।" किन्तु अनुब्रूयादिति शिष्यापेक्षयोक्तम् । तदात्मनो विरोधादर्थादेव तथा ज्ञात्वा अधीते । अथवा एतद्विधानमित्यादिष्टत्वादनुवचनस्येति यद्विहितं तत्सर्वं भवति । कुशतरुणपाणिः सप्रणवां सव्याहृतीं पच्छोऽर्धर्चशोऽनवानमुक्त्वा अहरहरधीयीत । तथैव शौनकेनाप्युक्तम् । अथ सावित्र्यनुवचनमन्यार्थमुक्तम् । तथैव सहान्येषामपि मन्त्राणां शिष्यः ऋषिदैवतछन्दोवचनं विहितम् । पुनरप्यृषिदैवतछन्दोवित्तानित्यस्वाध्यायस्य विहितत्वात् पाठक्रमेण विरुद्ध्यते । ज्ञानमात्रता अहरहः सावित्रीमेवानुब्रूयात् इति वचनाभावान्न भवतीति मन्यामहे । यदि स्याद्वेदादौ सकृत् स्यान्मध्येऽप्यपायविरोधात् शौनकेन वचनमिति । यदि कुर्यात्तस्य नित्या परिधानीयास्तस्य च विद्यते । तया चाहरहः कुर्यात् ॥ २३ ॥

१. A[1]. Between this and the next syllable, space is left out for 14 syllables.

२. A[2]. प्रभृतिः

३. A adds तस्य

४. A. अनवानमधीयीत

५. L omits विहित...तृप्यन्त्वित्युक्तम् (Line 11 in page 89)

व्याख्यातम् ॥२३॥ समा ते कुशतरुणानादाय आनडुहेन गोमयेन मूलकुण्डं कृत्वा यथोक्तमद्भिः परिषिञ्चति ॥२४॥ अथेमास्तर्पयति ॥२५॥

## अथ पञ्चमः खण्डः

अग्निस्तृप्यतु । प्रजापतिस्तृप्यतु । विरूपाक्षस्तृप्यतु । ब्रह्मा । वेदाः । देवाः । ऋषयः । सर्वाणि च छन्दांसि । ओङ्कारः । वषट्कारः । व्याहृतयः । सावित्री । यज्ञाः । द्यावापृथिवी । अन्तरिक्षम् । अहोरात्राणि । साङ्ख्याः । सिद्धाः । समुद्राः । नद्यः । गावः । गिरयः । क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः । नागाः । वयांसि । साध्याः । विप्राः । यक्षाः । रक्षांसि । पिशाचाः । भूतानि ॥

समा......ञ्चति ॥ सावित्र्यनुवचने समाप्ते शिष्यहस्तात् कुशतरुणानादायानडुहेन गोमयेन तेषां कुशतरुणानां मूले कुण्डं कृत्वा यथोक्तमद्भिः परिषिञ्चति । यथोक्तमिति तान् सर्वेनाचार्योऽग्रे संगृह्य दक्षिणेनाद्भिः परिषिञ्चतीति । अद्भिरिति न वक्तव्यम्, यथोक्तवचनात् सिद्धेः । अद्भिरित्युत्तरसूत्रार्थः ॥ २४ ॥

अथे......यति ॥ अथेत्यधिकारनिवृत्तौ । सावित्र्यनुवचनाधिकारो निवृत्तः । अथ नित्यस्वाध्यायेऽहरहस्तर्पणं कर्तव्यं वक्ष्याम इति सोऽत्रावपि प्रकृतः । अथ नित्यस्वाध्यायानन्तरमिमा वक्ष्यमाणा देवता अद्भिस्तर्पयति ॥ २५ ॥

## अथ पञ्चमः खण्डः

अग्नि......यामि ॥ अग्निस्तृप्यतु । विशेषणविशेष्याणां सकृत्तर्पणं वक्ष्यति । तस्मात्प्रजापतिर्विरूपाक्ष इति विशेषणविशेष्यसंशयनिवृत्त्यर्थं तयोः प्रत्येकं तर्पणवचनम् । ततोऽग्निः प्रजापतिस्तृप्यतु इति चोक्ते संभवसंशयनिवृत्त्यर्थमग्नेरपि पृथक्

१. IO and A[2] omit आनडुहेन गोमयेन

२. IO. हुत्वा

३. A[2] and IO omit तृप्यतु

४. T. विष्णुस्तृप्यतु and space is left out for about three syllables.

५. A[1] and T add तृप्यतु

६. A[1] and T add तृप्यन्तु

७. T omits च

८. A[1] and T add तृप्येतां

९. IO and A[2] omit गावः but add it after नागाः

१०. T omits साध्याः

११. All except IO add तृप्यन्तु

उपनयन देवतादीनां तर्पणम्



अथ निवीतीभूत्वा । मधुच्छन्दाः । शतर्चिनः । माध्यमाः । गृत्समदः । विश्वामित्रः । वामदेवः । अत्रिः । भरद्वाजः । वसिष्ठः । प्रगाथाः । पावमान्यः । क्षुद्रसूक्ताः । महासूक्ताः । एवमन्तानि तृप्यन्तु ॥

अथ संवीती भूत्वा । स्मृतिं तर्पयामि । धृतिं तर्पयामि । श्रद्धां तर्पयामि । मेधां तर्पयामि । प्रज्ञां तर्पयामि । धारणां तर्पयामि ॥१॥

छन्दांसि तृप्यन्ताम् । ऋषयस्तृप्यन्ताम् । देवतास्तृप्यन्ताम् ॥२॥

तर्पणवचनम् । ततो ब्रह्मादिक्षुद्र[महा]सूक्तान्तमुक्त्वा । एवमन्तानि तृप्यन्तु इति लक्षणसूत्रम् । एवमन्तानि पदानि प्रथमान्तानीत्यर्थः । तृप्यन्तु इत्यनुषक्तव्यानि भवन्ति । यद्येवमेकवचनद्विवचनयोरपि बहुवचनानुषङ्गः प्रसज्येत; नैष दोषः, परस्मैपदप्रथमपुरुषदर्शनार्थं तृप्यन्त्वित्युक्तम् । न बहुवचनमेव सर्वत्रेति त्रयाणां वचनानां एकनिर्देशे कर्तव्ये बहुवचनान्तानां पदानां भूयस्त्वात् बहुवचननिर्देशः कृतः । तस्माद् ब्रह्मा तृप्यत्वित्येवमेकवचनान्तानाम्, द्यावापृथिवी तृप्येताम् इति द्विवचनान्तस्य । अथ कहोळं कौषीतकमित्येवमादीनां द्वितीयान्तानां लक्षणाभावाद्यावदुक्तं तावत् स्यात्; न; स्मृतिमित्येवमादीनां द्वितीयान्तानां तर्पयामीति दर्शनात् कहोळं कौषीतकं इत्यपि द्वितीयान्तत्वात् तर्पयामि इत्यनुषज्यते । स्मृतिं तर्पयामि इति द्वितीयान्तानामाहस्य विधानम् ॥ १ ॥

छन्दांसि .....तृप्यन्ताम् ॥ छन्दांसि तृप्यन्तामित्येवमादीनां प्रथमान्तानां परस्मैपदे प्राप्ते आत्मनेपदविधानार्थ आरम्भः—देवतास्तृप्यन्तामिति ॥ २ ॥

१. All except IO omit अथ निवीती भूत्वा but read instead अथर्षयः
२. IO, A¹ and T मधुच्छन्दांसि
३. A¹ and T add तृप्यन्तु
४. A¹ and T add तृप्यतु
५. A¹ and A² omit एवमन्तानि तृप्यन्तु IO omits तृप्यन्तु alone.
६. All except IO omit अथ संवीती भूत्वा
७. IO omits तर्पयामि
८. IO and A¹ omit धृतिं
९. A² and T omit प्रज्ञां
१०. IO omits तृप्यन्ता
११. A¹, A² and T. तृप्यन्तु
१२. A. निर्देशतः
१३. A omits एकवचनान्तानां च वा
१४. A. तद्वत्
१५. L omits परस्मै...आरम्भः



K—12

अथ प्राचीनावीती दक्षिणां दिशमन्वीक्षमाणः । सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यमहाभारतधर्माचार्याः[1] । जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेयाः । सुयज्ञसांख्यायनजातूकर्ण्याः[1] । पैङ्गशाम्बव्यैतरेयाः । गार्गी वाचक्नवी[1] । बडवा प्रातिथेयी[1] । सुलभा मैत्रेयी[1] । कहोळं कौषीतकम्[3] । महाकौषीतकम्[3] । सुयज्ञम् । साङ्ख्यायनम्[3] । ऐतरेयम्[3] । महैतरेयम्[3] । पैङ्गचम्[3] । महापैङ्गचम्[3] । शाम्बव्यकम्[3] । महाशाम्बव्यकम्[3] । बाष्कलम्[3] । शाकलम्[3]। गार्ग्यम्[3] । महाजपलम्[3] । सुजातवक्तम्[3] । औदवाहिम्[3] । सौजामिम्[3] । बाभ्रव्यं सोमशर्माणम्[3] । पाञ्चालं वेदमित्रम्[3] । आचार्यं शौनकम्[3] ॥३॥ ये चान्ये आचार्यास्ते चापि तृप्यन्तु ॥४॥ प्रतिपुरुषं पितरः ॥५॥

अथ...... शौनकम् ॥ अथ प्राचीनावीती दक्षिणां दिशमन्वीक्षमाणस्तर्पयति । लक्षणमुक्तम् । द्वितीयान्तानां प्रथमान्तानां च गार्गी वाचक्नवी तृप्यत्विति विशेषणविशेष्य[ष्ययोगः] । तथा बडवा प्रातिथेयी । तथा सुलभा मैत्रेयी । तथा कहोळं कौषीतकं तर्पयामि इति । बाभ्रव्यं सोमशर्माणं तर्पयामीति विशेषणविशेष्ययोगः । तथा पाञ्चालं वेदमित्रम् । तथा आचार्यं शौनकमिति च ॥ ३ ॥

ये च......तृप्यन्तु ॥ उत्तरस्तृप्यन्त्विवस्यन्त एको मन्त्रः । तस्मादेव च तदन्तनिर्देशः ॥ ४ ॥

प्रति......तरः ॥ पितर इति प्रथमानिर्देशात् पिता तृप्यतु, पितामहस्तृप्यतु। भवन्ति नाम्ना वा निर्देशः । आश्वलायनीयाः पितरं तर्पयामि इति ब्रुवते । तेषामपि प्रतिपुरुषं पितॄनिति द्वितीयान्तो निर्देशः । तस्मिन् प्रयोगे साम्यं च ॥ ५ ॥

१. A¹, A² and T add तृप्यन्तु
२. T omits माण्डव्य
३. A¹, A² and T. तृप्यतु
४. A¹, A² and T add तर्पयामि
५. IO and A² omit सुयज्ञं सांख्यायनं
६. IO and A² omit गार्ग्यं
७. IO omits सौजामिम्
८. IO, A¹ and A² ताभ्र
९. All copies of the text omit प्रतिपुरुषं पितरः but add पितरः पितामहः प्रपितामहः
१०. A. प्रभवन्ति

सुयज्ञः। सांख्यायनः। पैङ्ग्यः। कहोळः। कौषीतकिः। कहोळाय कौषीतकये स्वधास्तु[1] ॥६॥

अथ षष्ठः खण्डः

अहःशेषं स्थानमुपवासश्च॥१॥अपराह्णेऽक्षतधाना भिक्षित्वा, आज्याहुतिधर्मेणाग्नौ[2] पाणिना जुहुयात् "सदसस्पतिमद्भुतम्"इति प्रत्यृचं सूक्तशेषेण॥२॥ भैक्षैराचार्यं स्वस्तिवाच्य, अरण्ये समित्पाणिः सन्ध्यामुपास्ते, नित्यं वाग्यत[4] उत्तरापरमभिमुखोऽन्वष्टमदेशमर्धास्तमिते[5] मण्डले आ नक्षत्राणां दर्शनात्[6]।

[सुय......स्वधास्तु]॥ उत्तरेषां मन्त्राणां प्रत्यक्षविधानं संशयनिवृत्त्यर्थम्[7]॥६॥

अथ षष्ठः खण्डः

अह......सश्च॥ इदानीमुपनयनशेष उच्यते। प्रसङ्गात्तर्पणविधानं कृतम्; यदहः सावित्र्यनुवचनानन्तरमहश्शेषं स्थानं कर्तव्यम्। उपवासश्च कर्तव्यः॥ १॥

अप......षेण॥ अक्षतधाना इति यवधाना इत्यर्थः। ता भिक्षित्वा आदायेत्यर्थः। बौधायनीये कल्पे च यावतीत्यादानार्थे। प्रायेण कर्म चोदना वा। आज्याहुतिधर्मेण प्रतिश्रुतिहोमप्रकृतिवदित्यर्थः। अप्राप्तत्वाज्ज्ञानाद्धोमे वक्तव्यः। अग्नाविति तस्मिन्नेवोपनयनाग्नावित्यर्थः। पाणिनेति प्रतिप्रसवः। अप्रतिश्रुतिप्रकृतिके कर्मणि पाणिना होमः प्राप्तः। इहाज्याहुतिधर्मविधानात् स्रुवेण होमः प्राप्तः। "स्रुवेणाज्याहुतीः जुहोति"इत्युक्तम्। ततः पाणिनेति पाणिरेव प्रतिप्रसूयते। "सदसस्पतिम्" इति सूक्तशेषेण। प्रत्यृचशब्दस्य उक्त एव परिहारः॥ २॥

भैक्षै......जपित्वा॥ भैक्षैराचार्यं स्वस्तिवाच्य। इह यावदुक्तं स्वस्तिवाचनम् अरण्ये समित्पाणिरेकां समिधमादाय। अथवा समित्पाणिरञ्जलिधारणविशेषणं[8]

१. A¹, A² and T. तृप्यतु

२. IO adds प्रतिपुरुषं पितॄंस्तर्पयित्वा। सुयज्ञसांख्यायनस्तृप्यतु A¹ and A² read only सुयज्ञः सांख्यायनस्तृप्यतु after प्रपितामहः. See foot-note १ on page 90

३. T. Space is left out for writing अग्नौ पाणिना

४. IO, A¹ and A². वाग्यतोत्तरा

५. A² omits अर्धास्तमिते मण्डले

६. IO, A¹ and A². नदर्शनात्

७. A. निवृत्त्यताम्

८. A. दर्भैः

अतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वा ॥३॥ एवं प्रातः प्राङ्मुखस्तिष्ठन्ना मण्डलदर्शनात् ॥४॥ उदिते प्राध्ययनम् ॥५॥ अहरहः सायंप्रातरग्निं प्रणीयोपसमाधाय परिसमूह्य पर्युक्ष्य सुसमिद्धे जुहोति "अग्नये समिधमाहार्षं बृहते जातवेदसे तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहा" इति प्रथमाम्। "एधोऽस्येधिषीमहि" इति द्वितीयाम्। "समिदसि समेधिषीमहि" इति तृतीयाम्। "एषा ते अग्ने समित्तया वर्धस्व चाप्यायस्व

सम्यगित्थं पवित्रपाणिरिति। सन्ध्यामुपास्ते। नित्यमिति, न हि ब्रह्मचर्य एव याव- ज्जीवमित्येवमर्थम्। वाग्यत उत्तरापरमन्तर्देशमभिमुख आ नक्षत्राणां दर्शना- दास्ते। ततोऽतिक्रान्तायां सन्ध्यायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वा। स्वस्त्ययनानि त्रीण्युक्तानि जपित्वा वक्ष्यमाणं समिदाधानं करोति ॥३॥

एवं......र्शनात् ॥ एवमेवारण्ये समित्पाणिर्वाग्यतः प्रातरपि सन्ध्यां प्राङ्मुखस्तिष्ठति आ मण्डलदर्शनात् आ आदित्यस्योदयनादित्यर्थः ॥ ४ ॥

उदि......यनम् ॥ अथोदित आदित्ये प्रोक्तमध्ययनं प्राध्ययनं करोति। महाव्याहृतीः सावित्रिं स्वस्त्ययनानि च जपतीत्यर्थः। अथवा प्राध्ययनं प्रागुक्तमध्ययनम् "उत्थाय प्रातराचम्याहरहरधीयीत" इति विहितम्, उदित आदित्ये करोतीति कल्प्यम्। द्वयं हीदं प्रातःकालविहितं सन्ध्योपासनमहरहः स्वाध्यायश्च। तयोः किं पूर्वमिति क्रमसंशये अयं क्रमो विहितः। ततः सिद्धं सन्ध्योपासनं समाप्यैवाहरहः स्वाध्यायः कर्तव्य इति ॥ ५ ॥

अह......तुर्थीम् ॥ सायंप्रातरित्येतावत्युच्यमानेऽप्यहरहरसिद्धम्। तस्मादहरहरिति संज्ञार्थम्। अहरहः समिदाधानं नामेदमिति प्रयोजनं प्रागुक्तम्। अग्निं प्रणीयेति वा उपसमाधायेति वा सिद्धे उभयमुक्तम्, तयोरेकवद्वचनार्थम्। परिसमूह्य "महान्तं कोशम्" इति त्रिः पर्युक्षति। तदुत्तरत्र वक्ष्यमाणं पुनरपि समिद्धे जुहोति

१. IO adds वेदादिप्रभृति
२. IO, A¹ and T. प्रागध्ययनं
३. T. हार्षं
४. T. ब्रह्मवर्यं
५. A². समिदिति चतुर्थी
६. A. सम्यगर्थं भूतपाणिः
७. A adds वाग्यतमर्थं
८. A. उदयादित्यर्थः
९. L omits इत्यर्थः
१०. L omits अथ वा...अहरहः
११. A. समिद्धो

उपनयन समिदाधानम्



च । वार्धिषीमहि च वयमा च प्यासिषीमहि" इति चतुर्थीम् ॥६॥ अथ पर्युक्ष्य

"अग्निः श्रद्धां च मेधां च विनिपातं स्मृतिं च मे ।
ईळितो जातवेदाः शुनं नः संप्रयच्छतु ॥"

इत्यग्निमुपतिष्ठते ॥७॥ स एतेषां वेदानामेकं द्वौ त्रीन् सर्वान् वाधीते य एवं हुत्वाग्निमुपतिष्ठते ॥८॥ तदपि श्लोकाः —

"अश्वत्थः खदिरोऽर्कश्च प्लक्षो वैकङ्कतश्शमी ।
काष्मर्यश्च शकृद्धन्यं सीरवाहाश्च सर्वशः ॥
वेणुं वर्ज्याथ वान्यानि निम्बारलसकण्टकान् ।
करञ्जाम्रासवर्णाश्च वर्ज्याः कान्ताश्च नामतः ॥

मन्त्रलिङ्गात्समिद्धोमाः चतुर्भिर्मन्त्रैश्चतस्रः समिधो जुहोति । एकां समिधं केचिद् जुह्वति, अष्टौ केचित्– इत्येवंविधानां शाखान्तरविहितानां प्रदर्शनार्थं प्रथमादिविधानम् ॥ ६ ॥

अथ......ष्ठते ॥ समिधो हुत्वा अथ तथैव पर्युक्ष्य "अग्निः श्रद्धां च मेधां च" इत्यनेनाग्निमुपतिष्ठते ॥ ७ ॥

स ए......ष्ठते ॥ होमोपस्थानयोग्यस्तुतिवचनमिदम् ॥ ८ ॥

तदपि श्लोकाः ॥ अत्र श्लोका अपि भवन्ति अश्वत्थ इत्येवमादयः । शकृद्धन्यमिति शुष्कगोमयं अर्थ्यमार्द्रस्य होमे विरोधात् । सीरवाहाश्च सर्वश इति नद्यामागतानां वृक्षाणामनियमः । इदानीं सीरवाहाश्चाविशेषवचनात् द्वे अवर्जनार्थम् । निम्बारलसकण्टकानित्यत्र निम्बादीन् वर्जयित्वा सीरवाहाश्च सर्वशः । अस्मिन्

१. All except T. चावनि
२. IO and A[1]. देवानां
३. A[2]. वित्वा
४. IO and A[1]. अग्निहोत्रमुप
५. IO. तदेते
६. IO. खादिरः
७. T. शकृद्धन्यं
८. IO and A[1]. क्षीर T. वीर
९. T. सर्वतः
१०. IO. वेणूपज्याथ अन्यानि
११. T. करञ्जाम्ला IO. करञ्जाम्रा
१२. T. वेज्यका
१३. A. बखानयोः स्तुति
१४. A. अर्घ्य

होमार्थी तु प्रयुञ्जीत नित्ये नैमित्तिकेऽपि वा ।
पालाशी तु स्रुगेव स्याद्वा पार्णः खादिरः स्रुवः ॥"

इति ॥९॥

अथ सप्तमः खण्डः

अथ व्रतादेशनम् ॥१॥ तस्योपनयनेन[2] कल्पो व्याख्यातः॥२॥ न सावित्री-

पक्षे करञ्जादीनामप्रतिषेधः समुच्चयार्थः। अथवा करञ्जादीनां प्रथमानिर्देशः चोद-नावैषम्याद्विधानान्तरमिदं करञ्जाम्रासवर्णाश्च कान्तानामानश्च वृक्षा वर्ज्याः। अन्ये क्षीरवाहाश्च सर्वे ग्राह्याः। असवर्णा इति स्नुहिरि[3]ति केचित्; असवर्णत्वात् अस-मानवर्णो[4]ऽसवर्ण इति केचित्; प्र[5]सिद्धं वृक्षनामधेयमिति केचित्। असवर्णाः कान्ताश्च नामत इति असमानवर्णशब्दः नाम[?] सप्तच्छदमाहुः। एतान् विहितान् वृक्षान् होमार्थे होमकर्मणि प्रयुञ्जीत। नित्य इति प्रकृतो ब्रह्मचारिहोमो विवक्षितः, तस्य नित्यत्वात्। नैमित्तिकेषु होमकर्मसु प्रयुञ्जीत। शास्त्रान्तरविहिता नैमित्तिकाः। न ह्यस्मच्छास्त्रे समिद्धोमो नैमित्तिको विहितोऽस्ति। प्रसङ्गादिदमुच्यते। पालाश्येव तु स्रुक् स्यात्। पार्णो वा खादिरो वा स्रुवः स्यात् इत्यनर्थान्तरम्। समित्प्र धाने होमे विहितत्वादङ्गभूतेष्वपि इध्महोमादिष्वयमेव वृक्षनियमः ॥ ९ ॥

अथ सप्तमः खण्डः

अथ......शनम् ॥ अथेदानीं व्रतादेशनं वक्ष्यामः ॥ १ ॥

तस्यो......ख्यातः ॥ तस्य व्रतादेशस्योपनयनेन कल्पो व्याख्यातः। कल्प इति विधानम् ॥ २ ॥

न सा......न्वाह ॥ कृत्स्नस्योपनयनस्य प्राप्तौ विशेष उच्यते—सावित्रीं नान्वाह; अन्यद्दैक्षचरणान्तं कर्म भवतीति ॥ ३ ॥

१. T omits स्यात्
२. All except L. उपनयनकल्पः
३. A. स्नहिरिति
४. A. आसवर्ण
५. A. प्रति सिद्धं

उपनयन व्रतादेशनम्



मन्वाह ॥३॥ दण्डप्रदानान्तमित्येके ॥४॥ उदगयने शुक्लपक्षेऽहोरात्रं ब्रह्मचर्यमुपेत्याचार्योऽमांसाशी ॥५॥ चतुर्दशीं परिहाप्याष्टमीं[1] नवमीं[2] च ॥६॥ आद्योत्तमे चैके ॥७॥ यां वान्यां[3] प्रशस्तां मन्येत तस्यां शुक्रियब्रह्मचर्यमादिशेत॥८॥ 'शुक्रियब्रह्मचारी भव' इत्याचार्यः॥९॥ 'शुक्रियब्रह्मचारी भवानि' इतीतरः॥१०॥ एवमुत्तरेषां यद्यद्व्रतमादिशेत तस्य तस्य नाम्ना निर्दिशेत्॥११॥

दण्डप्रदानान्तमित्येके ॥ दण्डप्रदानान्तं कुर्यादित्येके। समापयेदित्येके। भैक्षचरणान्तं समापनम् ॥ ४ ॥

उद......साशी ॥ उदगयने। शुक्लपक्ष इति पूर्वपक्ष इत्यर्थः। अहोरात्रं ब्रह्मचर्यमुपेत्य आचार्यः अमांसाशी भूत्वा व्रतादेशनं कुर्यात् ॥ ५ ॥

चतु......मीं च ॥ चतुर्दशीं परिहाप्य अष्टमीं च नवमीं च ॥ ६ ॥

आद्यो......चैके ॥ आद्योत्तमे च प्रतिपच्चतुर्दश्यौ च एके आचार्याः परिहाप्य कुर्वन्ति ॥ ७ ॥

यां वा......शेत ॥ इदानीमन्यासु च विशेष उच्यते। यां वा अन्यां प्रशस्तां नक्षत्रप्रशस्तामित्यर्थः, तस्यामेवंविधायां तिथौ शुक्रियब्रह्मचर्यमादिशेत ॥ ८ ॥

कथमादिशेतेति चेत्—

शुक्रि......चार्यः ॥ 'शुक्रियब्रह्मचारी भव' इत्याचार्य आह ॥ ९ ॥

शुक्रि......तरः ॥ 'शुक्रियब्रह्मचारी भवानि' इतीतर आह ॥ १० ॥

एवं......दिशेत् ॥ एवमेवोत्तरेषां व्रतानां यद्यद् व्रतमादिशेत् तस्य तस्य नाम्ना ब्रह्मचर्यं निर्दिशेत्। शाक्वरब्रह्मचारी भव, माहाव्रतिकब्रह्मचारी भव, औपनिषदब्रह्मचारी भव, गोदानब्रह्मचारी भव—इति। एवमुत्तरेषामिति न वक्तव्यम्।

१. T adds च
२. IO omits नवमीं
३. IO. अपवाम्यामहः प्रशस्तां
४. T. भः
५. IO and A[1] omit तस्यां
६. Here and later all copies of the text read शुक्रय
७. A. प्रशस्तातनक्षत्र
८. A omits इति

त्रिरात्रं ब्रह्मचर्यं चरेत् ॥१२॥ द्वादशरात्रं संवत्सरं वा ॥१३॥ यावद्वा

यद्यद्व्रतमादिशेत तस्य तस्य नाम्ना निर्दिशेदित्येतावता सिध्यति। एवं तर्ह्येवं उत्तरेषां ब्रह्मचारिशब्दानामेव निर्देशः कार्य इत्यर्थः ॥ ११ ॥

त्रिरा......चरेत् ॥ त्रिरात्रं ब्रह्मचर्यं चरेत्। ननु च उपनयनप्रभृति ब्रह्मचर्यमेवा समावर्तात्। एवमपि विशेषवचनमिदं शुक्रियब्रह्मचर्यमिति। त्रिरात्रं व्रतं चरेदित्यर्थः ॥ १२ ॥

द्वाद......रं वा ॥ ब्रह्मचर्यकालविकल्पः ॥ १३ ॥

याव......न्येत ॥ यावन्तं कालमाचार्यो मन्येत तावन्तं वा शुक्रियब्रह्मचर्यं चरेद् इत्यर्थः ॥ १४ ॥

१. A adds तद्यथा—अग्न एतं ते शुक्रियब्रह्मचारिणं परिददामि। इन्द्रैतं ते शुक्रियब्रह्मचारिणं परिददामि। आदित्यैतं ते शुक्रियब्रह्मचारिणं परिददामि। विश्वेदेवा एतं वः शुक्रियब्रह्मचारिणं परिददामि। कामस्य शुक्रियब्रह्मचार्यसाविति। शुक्रियब्रह्मचार्यसि। समिधमाधेहि इति। अथ कस्मादुत्तरत्र सामान्यशब्दो न निर्देश्यति[?] विश्वेषु च देवेषु चरितं ते ब्रह्मचर्यमिति। तत्रापि च न प्रयोगार्थो निर्देशः। व्रतबहुत्वात् सामान्यनिर्देशः। प्रयोगकाले तु विश्वेषु देवेषु चरितं ते शुक्रियब्रह्मचर्यमिति वक्तव्यम्। अग्न एतं ते शाक्करब्रह्मचारिणं परिददामि। इन्द्रैतं ते शाक्करब्रह्मचारिणं परिददामि। आदित्यैतं ते शाक्करब्रह्मचारिणं परिददामि। विश्वेदेवा एतं वः शाक्करब्रह्मचारिणं परिददामि। कामस्य शाक्करब्रह्मचार्यस्यसाविति। शाक्करब्रह्मचार्यसि। समिधमाधेहि इति। चरितं ते शाक्करब्रह्मचर्यमिति। अग्न एतं ते माहाव्रतिक०। इन्द्रैतं ते माहाव्रतिक०। आदित्यैतं ते माहाव्रतिक०। विश्वेदेवा एतं वो माहाव्रतिकब्रह्मचारिणं परिददामि। कामस्य माहाव्रतिकब्रह्मचार्यसि। चरितं ते माहाव्रतिकब्रह्मचर्यमिति। अग्न एतं ते औपनिषदब्रह्मचारिणं परिददामि। इन्द्रैतं ते औप०। आदित्यैतं ते औप०। विश्वेदेवा एतं व औप०। कामस्यौपनिषदब्रह्मचार्यस्यसाविति। औपनिषदब्रह्मचार्यसि। समिध०। चरितं ते औपनिषदब्रह्मचर्यमिति। अग्न एतं ते गोदानब्रह्मचारिणं परिददामि। इन्द्रैतं ते गोदान०। आदित्यैतं ते गोदान०। विश्वेदेवा एतं वो गोदान०। कामस्य गोदानब्रह्मचार्यस्यसाविति। गोदानब्रह्मचार्यसि। समिध०। चरितं ते गोदानब्रह्मचर्यमिति ॥

यद्य......दिशेत् ॥ शुक्रियब्रह्मचर्यनिर्देशः सर्वत्रोक्तम्। यथा यद्यद्व्रतमादिशेत तस्य तस्य व्रतमादिशेत। तस्य तस्य व्रतस्य नाम्ना सर्वत्र ब्रह्मचारिशब्दं निर्दिशेत् ॥

२. A. ब्रह्मचारि कालविकल्पौ

उपनयने व्रतादेशनम्



गुरुर्मन्येत ॥१४॥ गोदानस्य च¹ ॥१५॥ शाक्वरं तु संवत्सरं माहाव्रतिकमौप²-निषदं च ॥१६॥ पूर्णे काले चरितब्रह्मचर्ये³ शंयुबार्हस्पत्यान्ते⁴ वेदे प्रोक्ते रहस्यं श्रावयिष्यन्⁵ कालनियमं चादेशेन प्रतीयेत ॥१७॥ कृतप्रातराशस्य⁶ ॥१८॥ अपराह्णेऽपराजितायां दिशि हुत्वाचार्यः अथैनं यास्वेव देवतासु परिदत्तो भवति तास्वेनं⁷ परिपृच्छति 'अग्नाविन्द्र आदित्ये विश्वेषु च देवेषु

गोदानस्य च ॥ गोदानव्रतस्य एत एव कालविकल्पाः । ननु द्वितीयं व्रतं गोदानम्, न खलु पञ्चमम्; कथमेतद् गम्यते? पञ्चममिति गोदानस्य कर्म । गोदानस्येत्यन्वर्थसंज्ञा, गोदानान्ते कर्तव्यत्वात् । तच्च षोळशे वर्षे विहितम्, अष्टादशे वा । तस्माद् गोदानं पञ्चममिति मन्यामहे ॥ १५ ॥

शाक......दश्च ॥ तुशब्दोऽवधारणार्थः । शाक्करव्रतं संवत्सरमेव चरेत् । तथा माहाव्रतिकमौपनिषदं च ॥ १६ ॥

पूर्णे......येत ॥ पूर्णे व्रतकाले तत्तद्व्रतं ब्रह्मचर्यं चरिते शंयुर्बार्हस्पत्यान्ते "तच्छंयोः" इत्येतदन्त इत्यर्थः । वेदे प्रोक्ते रहस्यं श्रावयिष्यन्नाचार्यः कालनियमं चादेशेन प्रतीयात् । उदगयने शुद्धपक्ष इत्येवमादिनियम इहापि भवतीत्यर्थः ॥१७॥

कृत......शस्य ॥ कृतप्रातरशनस्य कर्म कुर्यात् ॥ १८ ॥

अप......मिति ॥ अपराह्णेऽपराजितायां प्रागुदीच्यां दिशि हुत्वा । अनादेशे चेति प्राशाभिश्चतसृभिर्जुहोति । आज्यं द्रव्यं प्रकृतिवच्च कर्म भवति । अथाचार्य एनं शिष्यं यास्वेव देवतासु परिदत्तो भवति तास्वेव पृच्छति । अग्नाविन्द्र आदित्य इति यथाव्रतम् ॥ १९ ॥

१. IO and A[1] omit च. T. तु
२. IO व्रतमुप A[1] and T व्रतमौप
३. IO and T चरिते
४. A[2]. शंयुर्बा-
५. T Space is left out for writing काल...प्रती
६. IO and A[1] प्रातराशः A. प्रातराशिकः
७. IO. तास्वैवैनं
८. T omits अग्ना...विश्वेषु च
९. A adds व्रतादेशेनं
१०. A adds न

चरितं ते ब्रह्मचर्यम्' इति ॥१९॥ 'चरितं भो' इति[1] प्रत्युक्ते पश्चादग्नेः प्राङ्मुखे[2] स्थिते[3] अहतेन वाससाचार्यः प्रदक्षिणं मुखं त्रिः परिवेष्ट्य[4] उपरिष्टाद्दशाः[5] कृत्वा यथा न[6] संभ्रश्येत ॥२०॥ 'त्रिरात्रं[7] समिदाधानं भैक्षाचरणमधःशय्यां गुरुशुश्रूषां च कुर्वन्[8] वाग्यतोऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्रं[9] उपवसस्व' इति॥२१॥ अत्र[10] हैके तानेव नियमांस्तिष्ठतो रात्र्यामेवोपविशन्ति[11] ॥२२॥ आचार्यो[12]ऽमांसाशी ब्रह्मचारी ग्रामान्निष्क्रामन्नैतानीक्षेतानध्यायान् स्पृशतामुं[पिशितामं]

चरितं......श्येत ॥ अथ शिष्येण 'चरितं भो' इति प्रत्युक्ते तस्याग्नेः पश्चात् प्राङ्मुखे स्थिते अहतेन वाससा आचार्यः तस्य मुखं प्रदक्षिणं त्रिः परिवेष्ट्य उपरिष्टाद्दशाः कृत्वा यथा न सम्भ्रश्येत, तथा कुर्यात् ॥ २० ॥

त्रिरा......स्वेति ॥ 'त्रिरात्रं समिदाधानम्' इत्येवमादि 'उपवसस्व' इत्येवमन्तमाह ॥ २१ ॥

अत्र......शन्ति ॥ अत्र हैके आचार्यास्तानेव नियमांस्तिष्ठतः स्थानविशेषणमेतस्यामेव[13] रात्र्यामुपविशन्ति ॥ २२ ॥

आचा......शेयुः ॥ अथाचार्यस्तदहरमांसाशी ब्रह्मचारी च भूत्वा श्वोभूते ग्रामान्निष्क्रामन्नेतानि नेक्षेत । अनध्यायानित्यनध्यायहेतू[14]नित्यर्थः । तानि यदोक्षेत, तदहरस्य न ब्रूयादित्यर्थः, अनध्यायानित्युक्तत्वात् । पिशितामामिति आममांसमि-

१. IO. इत्युक्तः

२. A². प्राङ्मुखस्थिते T. प्राङ्मुखेव स्थिते

३. IO adds ह

४. IO. वेष्य

५. IO. Space is left out for writing दशाः कृत्वा यथा

६. IO. न संमृश्येत

७. A². एकरात्रं

८. A². अकुर्वन्

९. T. होत्रं

१०. T. अत्र कैतानेव

११. IO. उपविशति

१२. IO omits आचार्योऽमांसाशी

१३. L. मेकतावनिकस्यां

१४. A. हेतुरित्यर्थः

चण्डालं सूतिकान्तेजनीमपहस्तकां[1] श्मशानं सर्वाणि च[2] श्यामरूपाणि यांन्यास्ये न प्रविशेयुः ॥२३॥ प्रागुदीच्यां दिशि पुण्ये देशे उदित आदित्येऽनुवचनधर्मेण वाग्यतायोष्णीषिणेऽन्वाह ॥२४॥ महानाम्नीष्वेवैष नियमः ॥२५॥ अथोत्तरेषु[4] प्रकरणेषु स्वाध्यायमेवं कुर्वीताचार्यस्येतरः श्रृणोति ॥२६॥ उष्णीषमाज्यभाजनं दक्षिणां चाचार्याय ददाति "त्वं[5] तम्" इति ॥२७॥

त्यर्थः । सूतकानिति आशौचवन्त इत्यर्थः । तेजनीमित्यर्थः [तेजनीं लोहितमित्यर्थः] । अपहस्तकां सर्वाणि श्यामरूपाणि च । यांन्यास्ये न प्रविशेयुरिति अभक्ष्यरूपाणि इत्यर्थः ॥ २३ ॥

प्रागु......न्वाह ॥ प्रागुदीच्यां दिशि पुण्ये देशे आदित्ये चोदिते तथैव वाग्यताय तथैवोष्णीषिणे रहस्यमनुवाचनधर्मेणान्वाह, अग्नेरुत्तरत इति । अत्र प्रसिद्धस्योपनयनाग्नेर्विद्यमानत्वात् विद्यमानसंयोगादिह च [दिह प्राङ्मुख आचार्यः] इत्येवमादिधर्मो भवति । ऋषिदैवतछन्दोवचनमुक्तमेव । सर्वमन्त्राणाम् 'ऋषीन् भो अनुब्रूहि' इत्येवमादीनि प्रश्नप्रतिवचनानि तत्रोक्तान्येवेति सर्वार्थत्वात् ॥ २४ ॥

महा......यमः ॥ महानाम्नीष्वेवैष होमादिनियमः । अन्यत्र कथम् ? इति चेत् ॥ २५ ॥

अथो......णोति ॥ अथोत्तरेषु प्रकरणेषु व्रतेष्वित्यर्थः । स्वाध्यायमेव कुर्वत आचार्यस्योत्तरः शिष्यः शृणोति । उत्तरयोर्द्वयोरेव रहस्यश्रवणम् । तस्मादुत्तरेष्विति न वक्तव्यम् । उत्तरेष्विति बहुवचननिर्देशो व्रतबहुत्वज्ञापनार्थः । अन्यान्यपि व्रतानि शाखान्तरेष्वाम्नातानि सन्ति ॥ २६ ॥

उष्णी......मिति ॥ उष्णीषं च पूर्वेद्युर्होमे यदाज्यभाजनं तच्चाम्यां च दक्षिणां आचार्याय ददाति "त्वं तम्" इत्यनयर्चा ॥ २७ ॥

१. IO. हस्तकं T. हस्तकान्
२. A[2] omits च
३. T. धाम्यस्येन
४. T. यथोत्तरेषु
५. T. त्वंतं
६. A[1] and IO. त्वं
७. L. वायाम्मास्याति प्र-
८. A. रहस्यश्रावणं
९. L. तं चाम्यां

"उच्चा दिवि" इति च ॥२८॥ प्रणवेन वा सर्वम् ॥२९॥ अत्र हैके वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु ॥३०॥ यथा परिदत्तमिति च माण्डूकेयः ॥३१॥

अथ अष्टमः खण्डः

अथातो दण्डनियमः ॥१॥ नान्तरागमनं कुर्यादात्मनो दण्डस्य च ॥२॥ अथ चेद् दण्डमेखलोपवीतानामन्यतमद्विशीर्येत छिद्येत वा तस्य तत्प्रायश्चित्तिः[२]

उच्चा......ति च ॥ "उच्चा दिवि" इत्यनयर्चा प्रतिगृह्णाति च ॥ २८ ॥

प्रण......सर्वम् ॥ प्रणवेन वा सर्वं प्रतिगृह्णाति । अथवा "उच्चा दिवि" इति च ददाति । चशब्दः समुच्चयार्थः । तथा सति प्रणवेन वा तूष्णीं वा गृह्णाति । सर्वमित्यन्यत्रापि ॥ २९ ॥

अत्र......णेषु ॥ अत्र व्रतान्ते हैके आचार्या वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु ॥ ३० ॥

यथा......केयः ॥ यथा परिदत्तं चरुं कुर्यादिति माण्डूकेय आह । अग्नय इन्द्रायादित्याय विश्वेभ्यो देवेभ्यश्चेत्यर्थः । चशब्दः पक्षव्यावर्तकः । अत्रेति विधानाद्ब्रह्मस्यश्रावणं कृत्वा पश्चाच्चरुं कुर्यात् ॥ ३१ ॥

अथ अष्टमः खण्डः

अथा......यमः ॥ अथेदानीं दण्डादीनां नियमा वक्ष्यन्ते । उत्तरसूत्रे वचनादिदं न वक्तव्यम् । एवं तर्हि विधानान्तरमिदं स एव दण्डः आन्तात् नियन्तव्य इति; मेखलादिवन्नान्यः कार्य इति ॥ १ ॥

नान्त......स्य च ॥ आत्मनश्च दण्डस्य चान्तरागमनं न कुर्यात् । व्यवायं न कुर्यात् ॥ २ ॥

अथ......थस्य ॥ अथ व्रतमध्ये दण्डादीनामन्यतमद्विशीर्येत चेद्वा भिद्येत चेद्वा, तस्य यदुद्वाहे कन्यायाः रथाङ्गस्य प्रायश्चित्तमाम्नातं तद्भवति ॥ ३ ॥

१. T. च

२. IO. प्रायश्चित्तिः यदि यदुद्वाहे

यदुद्वाहे रथस्य ॥३॥ मेखला चेदसन्धेया भवति[1] अन्यां कृत्वानुमन्त्रयते

"मेध्यामेध्यविभागज्ञे [2]देवि गोप्त्रि सरस्वति।

मेखले स्कन्नविच्छिन्ने[3] सन्तनोषि व्रतं मम॥" इति ॥४॥

एतयैव यथार्थमुपवीते[4] ॥५॥ "त्वमग्ने व्रतभृच्छुचिः" इत्येताभ्यामृग्भ्यामाहुतीर्हुत्वा, अथ मेखलां शान्ते वृक्षे निधाय पूर्णे काले मेखलामुपवीतं च दण्डे बध्नाति ॥६॥ तदप्येतत्

"यज्ञोपवीतं[6] दण्डं च मेखलामजिनं तथा।

जुहुयादप्सु व्रते पूर्णे वारुण्यर्चा रसेन[7] वा ॥७॥"

मेख......मम[मेति] ॥ मेखला छिन्ना पुनरसन्धेया भवति चेदन्यां मेखलां कृत्वा "मेध्यामेध्यविभागज्ञे" इत्यनयर्चा अनुमन्त्रयते ॥ ४ ॥

एत......वीते ॥ छिन्ने उपवीतेऽन्यत्कृत्वा यथार्थमनुमन्त्रयते । तद्यथा—

"मेध्यामेध्यविभागज्ञे देवि गोप्त्रि[9] सरस्वति।

उपवीतस्कन्नविच्छिन्ने सन्तनोषि[10] व्रतं मम॥"

इति उभयोरविशेष उच्यते ॥ ५ ॥

त्वम......ध्नाति ॥ "त्वमग्ने व्रतभृच्छुचिः" इत्येताभ्यामृग्भ्यामाहुतीर्हुत्वा; एताभ्यामृग्भ्यां इति परिसङ्ख्यार्थम्—एताभ्यामेवग्भ्यां जुहोति । न प्रकृतिवदिति । अथैतेरां[11] छिन्नां मेखलामुपवीतं वा शान्ते वृक्षे निधाय । शान्त इति शुष्कः । अथवा अकण्टकम् । अथ पूर्णे व्रतकाले मेखलां छिन्नां उपवीतं च दण्डे बध्नाति ॥ ६ ॥

तद......न वा ॥ तत्र एतदपि भवति, श्लोकविवक्षयोक्तम्—

" यज्ञोपवीतं दण्डं च मेखलामजिनं तथा "।

जुहुयादप्सु व्रते पूर्णे वारुण्यर्चा... ..... ॥

१. A[1] adds इति
२. IO. गोप्त्रि देवि
३. IO, A[1] and T. छिन्नं
४. All except A[2]. वीतेन
५. IO. इत्याकामकृषां
६. IO. वीती
७. IO. रयेन
८. L. भिन्ने
९. A. गोप्ति
१०. L. सन्तनोति
११. A अथैतां

ब्रह्मचारी प्रवत्स्यन्नाचार्यमनुमन्त्रयते "प्राणापानयोः" इत्युपांशु "इदं वत्स्यावो भो" इत्युच्चैः ॥८॥ "प्राणापान उरुव्यचास्त्वया प्रपद्ये देवाय त्वा गोप्त्रे परिददामि देवसवितरेष ते ब्रह्मचारी तं गोपाय समामृत" इत्युपांशु "ओं स्वस्ति" इत्युच्चैराचार्यः ओं स्वस्तीत्युच्चैराचार्यः ॥९॥

इति कौषीतकगृह्ये द्वितीयोऽध्यायः

जुहुयादिति प्रक्षिपेदित्यर्थः। रसेन वा जुहुयात्। रसेनेति प्रणवेनेत्यर्थः। त्रयाणां वेदानां रस इति हि स्तुतिः, प्रणवव्याहृतीभिर्वा। ताश्चापि रसा इत्युच्यन्ते ॥ ७ ॥

ब्रह्म......त्युच्चैः ॥ अथ ब्रह्मचारी प्रवत्स्यन्नाचार्यमामन्त्रयते। "प्राणापानयोः" इत्युपांशूक्त्वा "इदं वत्स्यावो भो" इत्युच्चैराह ॥ ८ ॥

प्राणा......चार्यः ॥ "प्राणापान उरुव्यचा" इत्येवमादि "समामृत" इत्येवमन्तमुपांशु उक्त्वा "ओम् स्वस्ति" इत्युच्चैराचार्य आह ॥ ९ ॥

इति कौषीतकिगृह्ये द्वितीयोऽध्यायः ॥

---

१. IO omits इति
२. IO. वत्स्यामो
३. IO. उरुव्यचात्वया
४. L. स्तुतः
५. L. रस इत्युच्यते

# अथ तृतीयोऽध्यायः

## प्रथमः खण्डः

स्नानं समावर्त्स्यमानस्य ॥१॥ आनडुहे चर्मण्युपविश्य केशश्मश्रुलोमनखानि वापयित्वा व्रीहियवैस्तिलसर्षपैरपामार्गैः सदापुष्पाभिरित्युच्छाद्याऽपोहिष्ठीयेनाभिषिच्यालङ्कृत्य "युवं वस्त्राणि" इति वाससी परिधाय "आयुष्यं वर्चस्यम्" इति सूक्तेन जातरूपमपिनह्य ॥२॥ उत्थाने कुमारस्य च ॥३॥ अथास्मिन्नन्वारब्ध इन्द्राग्निभ्यां स्थालीपाकस्य हुत्वा मधुपर्कं

## प्रथमः खण्डः

स्थानं......नस्य ॥ अधीताध्ययनस्य कृतब्रह्मचर्यस्य आचार्यकुलात् समावर्त्स्यमानस्य स्नानं विधीयते ॥ १ ॥ कथम् इति चेत्

आन......नह्य ॥ आनडुहे चर्मण्युपविश्य केशादीनि वापयित्वा व्रीह्यादिभिरुच्छाद्य । इतिशब्दः समुच्चयार्थः । "आपो हि ष्ठा" इति सूक्तेन अभिषिच्यालङ्कृत्य "युवं वस्त्राणि" इत्यनयर्चा वाससी परिधाय, ततः "आयुष्यं वर्चस्यम्" इति सूक्तेन जातरूपमपिनह्य होतारमन्वारभते ॥ २ ॥

उत्था......स्य च ॥ उत्थाने कुमारस्य चानेन सूक्तेन जातरूपोपनहनं कर्तव्यम् ॥ ३ ॥

अथा......दद्यात् ॥ अथास्मिन् शिष्ये अन्वारब्धे इन्द्राग्निभ्यां स्थालीपाकस्य हुत्वा होमशेषं समाप्य तस्मै मधुपर्कं दद्यात् ॥ ४ ॥

१. A[2]. पुष्पभिः

२. T. After रूप space is left out for writing about 8 syllables and it is followed by ह्य उत्था.

३. A[1]. अधि चास्मिन्

दद्यात् ॥४॥ प्रतिलीनस्तदहरासीत ॥५॥ "वनस्पते वीड्वङ्गः" "शास इत्था" इति रथमारोहेत् ॥६॥ यत्रैनं गत्वा पशुना वाहयेयुः तत्पूर्वमुपतिष्ठेत ॥७॥ गोभिर्वा समावर्तेत ॥८॥ फलवतो वा वृक्षात् ॥९॥ "इन्द्रश्रेष्ठानि" "स्योना पृथिवि भव" इति प्रत्यवरोहति ॥१०॥ ईप्सितमन्नं तदहर्भुञ्जीत ॥११॥ आचार्याय वस्त्रयुगं दद्यात् ॥१२॥ उष्णीषं मणिकुण्डलं दण्डोपानहं छत्रं च ॥

प्रति......सीत ॥ शिष्यः प्रतिलीनो भूत्वा तदहरासीत । उक्तं च—"नं चैनं तदहरादित्योऽभितपेत्" इति ॥ ५ ॥

वन......रोहेत् ॥ ततो गमनकाले "वनस्पते वीड्वङ्गः" "शास इत्था" इति द्वाभ्यां रथमारोहेत् ॥ ६ ॥

यत्रै......ष्ठेत ॥ यत्रैनं गत्वा अन्येन पशुना वाहयेयुः पूजयेयुः, तत्र पूर्वमुपतिष्ठेत गच्छेदित्यर्थः ॥ ७ ॥

गोभिः......र्तेत ॥ अथवा गोभिः सह समावर्तेत ॥ ८ ॥

फल......वृक्षात् ॥ अथवा फलवतो वृक्षाद्वा समावर्तेत ॥ ९ ॥

इन्द्र......हति ॥ "इन्द्रश्रेष्ठानि" "स्योना पृथिवि भव" इति द्वाभ्यां प्रत्यवरोहति रथात् ॥ १० ॥

ईप्सि......ञ्जीत ॥ तदहरीप्सितमन्नमभक्ष्यवर्जं भुञ्जीत ॥ ११ ॥

आचा......दद्यात् ॥ वस्त्रयुगमाचार्याय दद्यात् ॥ १२ ॥

उष्णि......त्रं च ॥ एतानि स्वयं गृह्णीयाच्च ॥ १३ ॥

१. T. Between इ and रा, space is left out for about 6 syllables.

२. T. Space is left out for writing रथ...यत्रैनं

३. A[1] and T. वाहतेयुः

४. A[1]. भिक्षा

५. T adds स्व

६. T. Space is left out for writing ईप्सि...चार्याय

७. L. न वैनं

## अथ द्वितीयः खण्डः

अगारं कारयिष्यन् "इहान्नाद्याय विशः प्रतिगृह्णामि" इत्युदुम्बरशाखया त्रिः परिलिख्य मध्ये स्थण्डिले जुहोति "कोऽसि कस्यासि कायं ते ग्रामकामो जुहोमि स्वाहा ॥ अस्यां देवानामधिभागधेयमितः प्रजाताः पितरः परेताः । इरावती जुहद् ग्रामकामो नु देवानां कश्च नान्तरेमि स्वाहा" इति ॥१॥ नव स्थूणागर्तान् खानयित्वोदमन्थानासिच्य

"इमां विमिन्वेऽमृतस्य शाखां मधोधारां प्रतरणीं वसूनाम् ।
एनां शिशुः क्रन्दत्वा कुमार एनां धेनुः पात्रकवथ्स ॥"

इत्युदुम्बरशाखां घृतेनाक्तां दक्षिणे द्वार्ये गर्तेऽवदधाति ॥२॥

## अथ द्वितीयः खण्डः

अगारं......इति ॥ विवाहादीनि समावर्तनान्तानि कर्माण्युक्तानि । तस्यापि पुनर्विवाहादीनि भवन्ति । इदानीमन्यानि गार्हस्थ्याङ्गभूतानि वक्ष्यन्ते । अगारं कारयिष्यन् "इहान्नाद्याय" इत्यनेन मन्त्रेण उदुम्बरशाखया त्रिः परिलिख्य । परीति सर्वतोभावे वर्तते । तस्य मध्येस्थण्डिलं जुहोति "कोऽसि" इति मन्त्राभ्यां स्वाहाकारान्ताभ्याम् । स्थण्डिल इति वचनात्, भूमौ जुहोति, नाग्नौ । इतरथा स्थण्डिलवचनानर्थक्यं हि स्यात् । उक्तं हि—"चतुरश्रं गोमयेन स्थण्डिलम्" इति । तस्माद् भाक्तोऽयं होमशब्दः । "प्राशितो ब्राह्मणे हुतः" इति यथा ॥ १ ॥

नव......दधाति ॥ नव स्थूणागर्तान् खानयित्वा चत्वारि द्वाराणि । तेषां द्वौ द्वौ स्थूणाराजस्यैकं च । तेषु उदमन्थानिति : "इमां विमिन्वे" इत्यनेन मन्त्रेण उदुम्बरशाखां स्थूणामित्यर्थः । घृतेनाक्तां पूर्वस्यां द्वारि दक्षिणे द्वार्ये गर्ते अवदधाति ॥ २ ॥

१. A[1] and T. गारयिष्यन्
२. A[2]. परि
३. L. कायां
४. A[2] adds इति
५. A[2]. न
६. A[2] and T. कांच
७. A[1]. खादयित्वा
८. A[1]. Leaf broken up to सिच्ये
९. A[1] and T. विमिम्वो
१०. A[2] and L. अमृतस्य धारां; T. शखामयोधारां
११. A[2]. ऐनां
१२. A[2]. ऐनां

["इमामुच्छ्रयामि भुवनस्य शाखां मधोर्धारां प्रतरणीं वसूनाम् ।]
एनां शिशुः क्रन्दत्वा कुमार एनां धेनुः पावकवत्स ॥"
इत्युत्तरतः ॥३॥ एवं द्वयोर्दक्षिणतः पश्चादुत्तरतश्च ॥४॥
"इमामहमस्मिन् वृक्षस्य शाखां घृतमुक्षन्तीममृते मिनोमि ।
एनां शिशुः क्रन्दत्वा कुमार आस्यन्दतां धेनवो नित्यवत्साः ॥"
इति स्थूणाराजमुच्छ्रयति ॥५॥ "एनं कुमारस्तरुण आवत्सो भुवनस्पतिः । कुम्भादधः कलशैर्गमः ॥ इहैव स्थूणे प्रतितिष्ठत्यश्वावती गोमती सीलमावती क्षेमे तिष्ठ घृतमुक्षमाणाः । इहैव तिष्ठन्निमिता तिल्विलेवास्या इरावतीं मध्ये पोषस्व तिष्ठन्तीं मा त्वा प्रापन्नघायव उपहूता इह गाव उपहूता अजावयोऽथोऽन्नस्य कीलाल उपहूता गृहेषु णो रथन्तरे प्रतितिष्ठ वामदेव्ये बृहति श्रयस्व" इति

एनां......इत्युत्तरे ॥ पुनः "एनां शिशुः क्रन्दतु" इत्यनेन मन्त्रेण द्वार्यें उत्तरे गर्ते अवदधाति ॥ ३ ॥

एवं......उत्तरतश्च॥ एवं द्वयोर्द्वयोः गर्तयोरवदधाति दक्षिणतः पश्चादुत्तरतश्च॥

इमां......मुच्छ्रयति ॥ तत "इमामहमस्मिन् वृक्षस्य" इत्यनेन मन्त्रेण स्थूणाराजमुच्छ्रयति ॥ ५ ॥

एनं कुमारः......पूर्वे ॥ अथ "एनं कुमारः" इत्यनेन मन्त्रेण स्थूणाराजमभिमृशति । ततः—सम्मितस्य स्थूणस्येत्यर्थः—स्थूणामभिमृशति । "सत्यं च श्रद्धा च" इति पूर्वे स्थूणे समभिमृशति ॥ ६ ॥

१. A¹. ऐनां
२. T. श्वेतीमामहं
३. T. दत्तां
४. T. इत्य
५. T. एन हि...अवत्सो
६. A¹ and T. पतिं
७. A². कलशैर्दमः
८. A¹ and T. तिष्ठन्ति
L. तिष्ठतु
९. T. ल्बलास्तामिरा
१०. A¹. तिष्ठति ममत्वा T. तिष्ठन्ती मात्वा
११. L omits उपहूता इह गावः
१२. T. वयो योनस्य
१३. A¹ and T. णे
१४. T. Space is left for writing बृहति
१५. L omits this word.
१६. A. संमितस्य संमितस्थूण-
१७. A. स्थूणाः समभि-

स्थूणाराजमभिमृश्यं संमितस्य स्थूणाः समभिमृशति "सत्यं च श्रद्धा च" इति पूर्वे॥६॥ "यज्ञश्च दक्षिणा च" इति दक्षिणे॥७॥ "बलं चोर्जं च" इत्यपरे॥८॥ "ब्रह्म च क्षत्रं च" इत्युत्तरे॥९॥ "श्रीस्तूपे"॥१०॥ "धर्मः" स्थूणाराजे॥११॥ "अहोरात्रे" द्वारफलके ॥१२॥ "संवत्सरः" पिधाने ॥१३॥ "उक्षा समुद्रः" इत्यभ्यक्तमश्मानं स्तूपस्याधस्तान्निखनेत् ॥१४॥ संस्थिते वास्तुकरणे शोभिते च समन्ततः ॥१५॥

यज्ञश्च......दक्षिणे ॥ "यज्ञश्च" इत्यनेन मन्त्रेण दक्षिणे स्थूणे समभिमृशति ॥

बलं......अपरे ॥ स्थूणे समभिमृशति ॥ ८ ॥

ब्रह्म......इत्युत्तरे ॥ "ब्रह्म च" इत्यनेन मन्त्रेण उत्तरे स्थूणे समभिमृशति ॥ ९ ॥

श्रीस्तूपे ॥ "श्रीस्तूपे" इति स्तूपमभिमृशति। मन्त्रलिङ्गात्स्तूपदर्शनमेव स्तूपकरणस्यापि लक्षणम् ॥ १० ॥

धर्मः स्थूणाराजे ॥ "धर्मः" इत्यनेन मन्त्रेण स्थूणाराजमभिमृशति ॥ ११ ॥

अहोरात्रे द्वारफलके ॥ "अहोरात्रे" इत्यनेनमन्त्रेण द्वारफलके अभिमृशति ॥

संवत्सरः पिधाने ॥ "संवत्सरः" इत्यनेन मन्त्रेण कवाटमभिमृशति ॥ १३ ॥

उक्षा समुद्र......निखनेत् ॥ "उक्षा समुद्रः" इत्यनयर्चा अभ्यक्तमश्मानं स्तूपस्याधस्तान्निखनेत् ॥ १४ ॥

संस्थिते......समन्ततः ॥ वास्तुकरणे संस्थिते शोभिते गन्धपुष्पादिभिरलङ्कृते। चकारात् सम्यगलङ्कृते। ततोऽनन्तर उक्तानि कार्याणि करोति ॥ १५ ॥

१. A[1] and T. मृशति
२. A[1] and T. मृशन्ति
३. T omits वास्तुकरणे
४. L adds वा
५. A omits this word.
६. A omits this word.
७. A omits स्थूणा
८. L. पुष्पगन्धादिभिः

## अथ तृतीयः खण्डः

"अग्निं दधामि मनसा शिवेन" इत्यग्निं प्रणीय "पृथिवीं शंभुवां ह प्रतितिष्ठस्व" इति प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवं मणिकं वा प्रतिष्ठाप्य आपोहिष्ठीयाभिस्तिसृभिः पूरयित्वा "अरिष्टा अस्माकं वीरा मा परा सेचि नो धनम्" इत्यपिधाय रथन्तरस्य स्तोत्रियेण पुनरादाय ककुप्कारं तिस्रः पूर्वाह्णे जुहोति ॥१॥ वामदेव्यस्य मध्यन्दिने ॥२॥ बृहतोऽपराह्णे ॥३॥ सावित्र्या-

## अथ तृतीयः खण्डः

अग्निं......होति ॥ अथ संस्थिते वास्तुकरणे समन्ततः शोभिते च "अग्निं दधामि" इत्यनेन मन्त्रेणाग्निं प्रणीय। अगारे एव सर्वार्थोऽग्निर्गृह्यते इति चोच्यते। अयमपि नित्यो धार्यः। ततः प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवमणिकं वा प्रतिष्ठाप्य "पृथिवीं शम्भुवा ह प्रतितिष्ठस्व" इति। नवेष्विति सद्योलूनेष्वित्यर्थः। प्रागग्रेष्वित्युदगग्रनिवृत्त्यर्थम्। तदपि दृश्यते। आपोहिष्ठीयाभिः तिसृभिः पूरयित्वा "अरिष्टा अस्माकम्" इत्यनेन मन्त्रेणापिधाय रथन्तरस्य स्तोत्रियेण "अभि त्वा शूर" इति प्रगाथेन पुनरादाय। ककुप्कारं ककुबुत्तराकारमित्यर्थः। तिस्र आहुतीः पूर्वाह्णे जुहोति ॥ १ ॥

वाम......दिने ॥ वामदेव्यस्य स्तोत्रियेण तिस्र आहुतीर्मध्यन्दिने जुहोति ॥

बृह......राह्णे ॥ बृहतः स्तोत्रियेण पुनरादाय ककुप्कारं तिस्र आहुतीरपराह्णे जुहोति ॥ ३ ॥

सावि......दूर्ध्वम् ॥ सावित्र्या च शतादूर्ध्वमनुसवनं जुहोति। रथन्तरस्य स्तोत्रियानन्तरं सावित्र्या च शतादूर्ध्वं जुहोति; तथा वामदेव्यस्य स्तोत्रियानन्तरम्; तथा बृहतः स्तोत्रियानन्तरम्—इत्येवमर्थमनुसवनमित्युक्तम्। चशब्दश्च ताभिः समुच्चयार्थः ॥ ४ ॥

१. A[1]. शभुवं प्रति T. शंभुवं प्रति
२. A[1] वीरमाबर T. वीरमवरा
३. T omits इति
४. A[2]. दायं

वास्तु करणम्



चानुसवनं शतादूर्ध्वम् ॥४॥ महाव्याहृतयश्चतस्रः । "वास्तोष्पते" इति चतस्रः। वास्तोष्पते ध्रुवा स्थूणा सौविष्टकृती दशमी स्थालीपाकस्य रात्रौ ॥५॥ ज्येष्ठं पुत्रमादाय जायया सहधान्याः प्रपद्यते "इन्द्रस्य गृहाः शिवा वसुमन्तो वरूथिनः । तानहं प्रपद्ये सह जायया सह प्रजया सह पशुभिः सह यन्मे किञ्चास्ति तेन । शमं शमं शिवं शिवं क्षेमाय वः शान्त्यै प्रपद्येऽभयं नो अस्तु" इति ॥६॥ एतयैवावृताषाढ्यां पौर्णमास्यां स्वस्त्ययनमित्याचक्षते ॥७॥ उद्धरेन्मणिकप्रतिष्ठापनं गृहप्रवेशनं च ॥८॥ "स्वस्ति नो मिमीताम्" इति

महा......रात्रौ ॥ अथ रात्रौ महाव्याहृत्यादिभिः स्थालीपाकस्य नवाहुतीर्जुहोति । सौविष्टकृती दशमी इत्यूर्ध्वनियमार्थः । ततः प्रशस्ते मुहूर्ते प्रतिपद्यते ॥५॥

ज्येष्ठं......स्त्विति ॥ ततो ज्येष्ठं पुत्रमादाय जायां च सहधान्याः इति प्रतिपद्यते "इन्द्रस्य गृहाः" इत्यनेन मन्त्रेण ॥ ६ ॥

एत......क्षते ॥ एतयैवावृता एवमेवाषाढ्यां पौर्णमास्यां स्वस्त्ययनमित्याचक्षते आचार्यः । स्वस्त्ययनमिति फलनिमित्तं नामधेयम् । स्वस्त्ययनार्थमेव कर्तव्यमित्यर्थः ॥ ७ ॥

उद्ध......नं च ॥ कृत्स्नप्राप्ताविदमुच्यते । मणिकप्रतिष्ठापनं गृहप्रवेशनं च अगारकरणमर्थादेव निवर्तते । न हि कृते कर्तव्यता अस्ति । गृहशोभाकार इष्यते, अविरोधात् । अग्निप्रणयनं निवर्तते, अर्थादेव गृहस्याग्नेर्विद्यमानत्वात् । मणिकप्रतिष्ठापनमुद्धरेदिति मृन्मयानां पात्राणां नवत्वज्ञापनार्थम् । ऋते मणिकादन्यानि नवानि कुर्यादिति । गृहप्रवेशप्रतिषेधो विवक्षितत्वाद् गृहानभिधानार्थत्वात् "इन्द्रस्य गृहाः" इति प्राप्तत्वात् कृतप्रयोगः । उपलेपोद्धननप्रोक्षणादिभिरगारं

१. A[1] and T omit च
२. T omits वास्तो...चतस्रः
३. T. ध्रुवः
४. A[1] and T. धान्यां
५. A[1] and T. शिराजसु
६. T. वर इति
७. T omits सह प्रजया
८. A[1]. स्वधने T. सयन्मे
९. A[1]. तेन शमं शिवं क्षेमाय वस्यान्ते
T. तेन शमर्मि क्षेमाय दस्यान्ते
१०. A. मुहूर्तेति
११. L. प्रतिपद्य तौ
१२. L omits गृह्य

पञ्चर्चं जपति ॥९॥ अथ ब्राह्मणभोजनम् ॥१०॥

## अथ चतुर्थः खण्डः

"ग्रामो मारण्याय परिददातु हविश्च महायमाय परिदेहि" इति ग्रामान्निष्क्रामन् ॥१॥ "अरण्यं मा ग्रामाय परिददातु हविश्च महायमाय परिदेहि" इति ग्रामं प्रविशन्नरिक्तः ॥२॥

"गृहान् भद्रान् सुमनसः प्रपद्येऽवीरघ्नो वीरवतः सुवीरान् ।
इरां वहतो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशेयम् ॥"

नवीकृत्य गन्धपुष्पधूपदीपमाल्यादिभिरलङ्कृत्य । यथोक्तानि च रथन्तरस्तोत्रियादिभिश्चत्वारि होमकर्माणि । तानि यथाकालं कर्तव्यानि । अन्येन कृतस्यागारस्य प्रपदेन यदर्थलुप्तं तन्निवर्तते । अन्यद् गृहशोभादि कर्तव्यम् । एवमेवेह केषांचित्पाठः ॥ ८ ॥

स्वस्ति......जनम्[जपति] ॥ "स्वस्ति नो मिमीताम्" इति पञ्चर्चं जपति । स्थालीपाकहोमानन्तरं स्वस्त्ययनं कर्तव्यम् ॥ ९ ॥

अथ ब्राह्मणभोजनम् ॥ १० ॥

## अथ चतुर्थः खण्डः

ग्रामो......ष्क्रामन् ॥ "ग्रामो मारण्याय" इत्येतं मन्त्रं जपेत्, ग्रामादरण्यार्थं निष्क्रामन् ॥ १ ॥

अर......रिक्तः ॥ ततोऽरण्यात् ग्रामं पुनः प्रविशन् "अरण्यम्" इत्येतं मन्त्रं जपेत्, अरिक्तः किञ्चिदादायेत्यर्थः ॥ २ ॥

गृहान्......नीयः ॥ "गृहान् भद्रान्" इत्ययं मन्त्रः प्रपदनीयः । अनेन मन्त्रेण प्रविशेदित्यर्थः । सदैतत्कर्तव्यम् । अहरहरुत्साहवता हि भवितव्यम् । नालस्याद् ग्रामेण भवितव्यम् ॥ ३ ॥

१. A[2]. माहायमा परि
२. T. Space is left out for writing a few syllables.
L. प्रविशेन्निक्तः
३. A[1] adds प्रपद्यते गृहान्
४. A[1]. वीरतरः
५. A[1]. माणं तेष्वहं
६. A omits एवं
७. A omits मा

प्रवास कर्तव्यानि



इति सदा [१]प्रपदनीयः ॥३॥ अनाहिताग्निः प्रवत्स्यन् गृहान् समीक्षते

"इमान्मे मित्रावरुणा गृहान् गोपायतं युवम् ।
[२]अविनष्टानविहृतान् पूषेमानभिरक्षतु ॥"

इति । "अपि पन्थामगन्महि" इति च॥४॥ प्रोष्यायन् [३]गृहान् समीक्षते "गृहा मा बिभीत मा मे बिभ्यतोर्जं [४]बिभ्यतेषमूर्जं बिभ्रद्वसुमनाः सुवर्चाः गृहानैमि सुमनसा मोदमानः । येषां मध्ये विप्रवसन्ति ये [५]सौमनसो बहु । गृहानुपह्वयामहे ते नो हिन्वन्तु जामयः । उपहूता इह गावः उपहूता अजावयः । [६]यो नस्य[अथो अन्नस्य] कीलाल उपहूता अजावयः" । "अस्योपसद्ये मारिषदयं श्रेष्ठी दधातु नः" इति गृह्यमग्निमुपस्थाय कल्याणीं वाचं प्रब्रूयात् ॥५॥ "विराजो दोहोऽसि विराजो दोहमशीय मयि विराजः पद्यायै दोहः" इति पाद्यप्रति[७]ग्रहणम् ॥६॥

अनाहिताग्निः······ति च ॥ "इमां मे मित्रावरुणा" इत्यनेन मन्त्रेण "अपि पन्थामगन्महि" इत्यनयर्चा च गृहान् समीक्षते । अनाहिताग्निरिति आहिताग्नि-निवृत्त्यर्थम् ॥ ४ ॥

प्रोष्य......ब्रूयात् ॥ [८]प्रोष्यायन् प्रत्यायन् प्रवासात् समीक्षते "गृहा मा बिभीत मा मे बिभ्यत" इत्यनेन मन्त्रेण "अजावयः" इत्येवमन्तेन । "अस्य" इति मन्त्रेण गृह्यमग्निमुपस्थाय कल्याणीं वाचं ब्रूयात्, न तदहः कुर्य्येदित्यर्थः ॥ ५ ॥

विराजो......ग्रहणम् ॥ "विराजो दोहोऽसि" इत्ययं मन्त्रः पाद्यप्रतिग्रहणम् । येन पाद्यं प्रतिगृह्णाति स पाद्यप्रतिग्रहणम् ॥ ६ ॥

१. A¹. प्रवतनियः T. प्रपतनीयः
२. A¹. अविभूतान् विजितानरुषैनान्
L. अविनष्टानभिभूतान् पूषैनान्
३. A² omits गृहान् समीक्षते
४. A¹. बभ्रिथ
५. T. सोमनसं
६. A² omits योनस्य...सद्ये
७. T. ग्रहः
८. L omits प्रोष्यायन्

## अथ पञ्चमः खण्डः

अनाहिताग्निर्नवं प्राशिष्यन्नाग्रयणदेवताभ्य इन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेण गृह्येऽग्नौ हुत्वा "प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय" इति हुतशेषाद् ग्रहं गृहीत्वा

"भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वशेन समशीमहि त्वा ।
स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे ॥"

इत्यद्भिरभ्युक्ष्य त्रिः प्राश्नाति ॥१॥

"अमोऽसि प्राण तदृतं ब्रवीम्यमोऽसि सर्वाण्यनु प्रविष्टः ।
समे जरां रोगमपनुद्य शरीरादमा म एधि मामृधाम इन्द्र ॥"

## अथ पञ्चमः खण्डः

**अना......श्नाति ॥** अनाहिताग्निर्नवं प्राशिष्यन् तेन नवेन द्रव्येण स्थालीपाकं श्रपयित्वा। स्थालीपाक इत्यनुक्तम्। "त एतेऽप्रयाजाः" इत्येवं प्राप्तस्याग्रयणस्य विशेषविधानात्। स्विष्टकृच्चतुर्थीभ्यो देवताभ्यः स्विष्टकृच्चतुर्थीभ्य इत्याग्रयणदेवताबहुत्वाद्देवतानियमार्थमुक्तम्। तस्मादिन्द्राग्नि आग्नेन्द्रो वा वैश्वदेवद्यावापृथिव्यौ चेति या उक्तास्ताभ्यः स्विष्टकृच्च ते च स्वाहाकारेण हुत्वा याज्यापुरोनुवाक्याप्राप्तेः तन्निवृत्त्यर्थः। स्वाहाकारेणैवेत्युक्तम्। चतुर्थीग्रहणं सौम्यश्यामाकनिवृत्त्यर्थम्। ततः स्विष्टकृदनन्तरं शेषाद् ग्रहम् "प्रजापतये त्वा ग्रहं गृह्णामि" इति गृहीत्वा। हुतशेषादित्युक्तत्वात्। स्विष्टकृदनन्तरमित्युक्तम्; इतरथा हूयमानशेषो हि स्यात्। ततो ग्रहमद्भिरभ्युक्ष्य "भद्रान्नः" इत्यनेन मन्त्रेण त्रिः प्राश्नाति। सकृदेव मन्त्रमाह। तदुक्तं बहुशः "समशीमहि" इति मन्त्रलिङ्गात् प्राशनमन्त्रः, नाभ्युक्षणमन्त्रः ॥ १ ॥

**अमोऽसि......नाभिम् ॥** "अमोऽसि" इत्यनयर्चा हृदयदेशमभिमृश्य "प्राणानां ग्रन्थिरसि" इति नाभिमभिमृशति ॥ २ ॥

१. All except A[2]. अहि
२. T adds द्यावापृथिवीभ्यां
३. T. Space is left out for writing स्वाहाकारेण
४. T. देवताः
५. A[1] and T. प्राश्नीयात्
६. L. प्रायाजाः
७. L. स्विष्टकृते
८. A. नाभिमृशति

इति हृदयदेशमभिमृश्य "प्राणानां ग्रन्थिरसि मा[1] विस्रस" इति नाभिम् ॥२॥ "भद्रं कर्णेभिः" इति यथारूपम् "तच्चक्षुः" इत्यादित्यमुपस्थाय॥३॥ "परि वैपस्वेदं[2] वृञ्जन्तु घोषिण्यस्सँ मा स्वस्थ गोपते मा वो रक्षो मनो रिषत्" "पूषा गा अन्वेतु नः" इति गाः प्रतिष्ठमानां[6] अनुमन्त्रयते॥४॥ "परि पूषा" इति परिक्रान्तासु॥५॥

"यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च ।
ता नः सन्तु पयस्वतीर्वह्वीर्गोष्ठे घृताच्यः ॥"

"आ गावो अग्मन्" इति सप्तागर्तासु॥६॥ उत्तमामाकुर्वन् "मयोभूर्वातः" इति च सूक्तेन गोष्ठगताः॥७॥ यासु प्रथमा प्रजांयेत तस्याः पीयूषं जुहुयात् "संवत्सरीणं

भद्रं......स्थाय ॥ "भद्रं कर्णेभिः" इत्यनयर्चा यथारूपं कर्णादीन्यङ्गान्यभि-मृश्य "तच्चक्षुः" इत्यादित्यमुपस्थाय होमं संस्थापयति ॥ ३ ॥

परि......यते ॥ "परि वपस्व" इत्यनेन मन्त्रेण "पूषा गा अन्वेतु नः" इत्य-नयर्चा च गाः प्रतिष्ठमाना अनुमन्त्रयते ॥ ४ ॥

परि......न्तासु ॥ "परि पूषा" इत्यनयर्चा परिक्रान्तासु गोष्वनुमन्त्रयते॥५॥

यासामूधः......सप्तागतासु ॥ "यासामूधः" इत्येतं मन्त्रं च "आ गावः" इति सप्त ऋचश्च गोषु[गोष्वा]गतासु जपति ॥ ६ ॥

उत्तमा......गताः ॥ उत्तमामाभिः सह कुर्वन् "मयोभूर्वातः" इति सूक्तेनानु-मन्त्रयते ॥ ७ ॥

यासु प्र......द्वाभ्याम् ॥ प्रतिसंवत्सरं तासां या प्रथमा प्रजायेत तस्यां पीयूषम् "संवत्सरीणं पय उस्रियायाः" इति द्वाभ्यामृग्भ्यां जुहुयात्। यावदुक्तमत्र कर्म ॥ ८ ॥

१. $A^1$ and T. समा
२. T. वस वेदं  $A^1$. वसस्वेदं
३. T and $A^1$. व्रजन्तु
४. $A^1$ and T. समान
५. T and $A^1$. अक्षो नवो रिषन्
६. T. मानासु
७. $A^1$ and $A^2$. घृतस्य
८. $A^1$ and T. गतासु
९. $A^2$ and IO. गता या प्र
१०. $A^1$ and T. प्रजायेति
११. L omits अङ्गानि

पय उस्रियायाः" इति द्वाभ्याम् ॥८॥ या फाल्गुन्या उत्तरामावास्या सा रेवत्या संपद्यते तस्यामङ्गलक्षणानि कारयेत् "भुवनमसि सहस्रमसि रायस्पोषं मा वो दधत्। अक्षतमस्यरिष्टं विराळन्नं गोपायति। यावतीनामिदं करिष्यामि भूयसीनामुत्तरासां क्रियासम्" इति ॥९॥ यदि यमौ प्रजायेत महाव्याहृतिभिर्हुत्वा यमसूं दद्यात् ॥१०॥

## अथ षष्ठः खण्डः

अथ वृषोत्सर्गः ॥१॥ कार्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्यां च गवां मध्ये सुसमिद्धमग्निं कृत्वाज्याहुतीर्जुहोति "इह धृतिरिह स्वधृतिरुपसृजं धरुणं मात्रे धरुणो मातरं धयन्। रायस्पोषमिषमूर्जमस्मासु दीधरत्

या फाल्गुन्या......क्रियासमिति ॥ याँ फाल्गुन्या उत्तरामावास्या सा रेवत्या यदा सम्पद्यते, तस्यामङ्गलक्षणानि कारयेत् "भुवनमसि" इत्यनेन मन्त्रेण ॥

यदि......दद्यात् ॥ यदि कदाचित् गौर्यमौ प्रजायेत महाव्याहृतिभिर्हुत्वा यमसूं दद्याद् ब्राह्मणाय। महाव्याहृतिभिरिति न वक्तव्यम्; हुत्वेत्युच्यमानेऽपि अनादेशे चेध्मियतां व्याहृतय एव भवन्ति; इह महाव्याहृतिभिरिति क्रियार्थमुक्तम्। तस्मात् प्रकृतिवत् कर्म कृत्वा आवापस्थाने तिस्रो महाव्याहृतीर्जुहोति। तां दद्यादित्येतावता सिद्धे, पुनर्यमसूमिति वत्साभ्यां सह दद्यादित्येवमर्थमुक्तम् ॥ १० ॥

## अथ षष्ठः खण्डः

अथ......त्सर्गः ॥ अथेदानीं वृषोत्सर्गो वक्ष्यते ॥ १ ॥

कार्ति......ष्णस्य ॥ कार्तिक्यां पौर्णमास्यामाश्वयुग्भ्यां[युज्यां] रेवत्यां वा गवां मध्ये सुसमिद्धमग्निं कृत्वा तस्मिन्नाज्याहुतीर्जुहोति "इह धृतिः" इत्यनेन मन्त्रेण। "पूषा गा अन्वेतु नः" इति पौष्णस्य मन्त्रगणस्य ऋग्भिश्च। परिभाषासिद्धस्याज्यस्य

१. All except T. तस्या मङ्गलं क्षणानि
२. A[1] and T. स्पोषाय सुचोदसमक्षत
३. A[1] and T. गोपायेत्
४. A[1] and T. वत्सं दद्यात्
५. A[1] and T. अवसृजं
६. A[1] and T. मातरं धरुणो
७. A omits या
८. L omits यदा
९. L. यमसौदनं दद्यात्
१०. A. नियमाद्व्याहृतयः

वृषोत्सर्गः



स्वाहा" "पूषा गा अन्वेतु नः" इति पौष्णस्य ॥२॥ हुत्वैकवर्णं द्विवर्णं त्रिवर्णं वा यो वा यूथं छादयति यं वा यूथं संछादयति ॥३॥ रोहितो वैवं स्यात् ॥४॥ सर्वाङ्गैरुपेतः ॥५॥ यूथे वर्चस्वितमः स्यात्तमलंकृत्य ॥६॥ यूथे मुख्याश्चतस्रो वत्सतर्यः ॥७॥ ताश्चालंकृत्य ॥८॥

"एतं युवानं परि वो ददामि तेन क्रीळन्तीश्चरत प्रियेण ।
मा नश्शाप्त जनुषा संविदाना रायस्पोषेण समिषा मदेम ॥"

पुनरिहाज्याहुतिग्रहणं [न] परिभाषासिद्धमिदमाज्यम् वाचनिकमिदं द्रव्यान्तरमिदमाज्यं स्यादित्येवमर्थम् । तस्मादिह प्रकृतिनिवृत्तिः । तस्माद्यावदुक्तमिह कर्म स्यात्। पौष्णस्येत्यत्र ननु करणार्थत्वात् तृतीयया वक्तव्यम् ; तथा हि सति प्रत्यृचं होमो न स्यात्, एकवचनचोदितत्वात् । षष्ठ्या पुनर्निर्देशे ऋग्भिरित्यध्याहारः क्रियते ॥ २ ॥

हुत्वै......यति ॥ हुत्वा होमानन्तरमेव एकवर्णं वा द्विवर्णं वा यो यूथं छादयति उच्चतम इत्यर्थः ; यं वा यूथं सञ्छादयति नीचतमो वेत्यर्थः ॥ ३ ॥

रोहि......व स्यात् ॥ रोहित एव स्यात् ॥ ४ ॥

सर्वाङ्गैरुपेतः ॥ स्यात् । एकवर्णं वेति सिद्धे अभिमतपक्षनियमार्थमिदमुच्यते, सर्वाङ्गैरुपेतश्च स्यात् ॥ ५ ॥

यूथे..........कृत्य ॥ यूथे वर्चस्वितमः स्यात्, तमेवंविधं वृषभमलङ्कृत्य ॥ ६ ॥

यूथे......तर्यः ॥ ता आदाय ॥ ७ ॥

ताश्चालङ्कृत्य ॥ ८ ॥

एतं......यते ॥ "एतं युवानम्" इत्यनेन मन्त्रेण वृषभेण संहता अनुमन्त्रयते ॥

१. A[1] and T omit यं वा यूथं संछादयति
२. T. वैश्यात्
३. A[1] and T. मा वश्शात्र
४. A[1] and T. सुभ॰॥
५. L. अवाच
६. A. आज्यमस्या
७. L. स्येत्याहुः
८. A adds मत्स्यात्
९. L omits यूथे...तर्यः ॥ ता आदाय ॥ ताश्चालंकृत्य ॥

इत्यनुमन्त्रयते॥९॥ नभ्यस्थे वृषे "मयोभूर्वातः" इति च सूक्तेन॥१०॥ सर्वासां पयसि स्थालीपाकं श्रपयित्वा ब्राह्मणान् भोजयेत् ॥११॥

अथ सप्तमः खण्डः

अथात उपाकरणम्॥१॥ ओषधीनां प्रादुर्भावे॥२॥श्रावण्यां पौर्णमास्याम्॥ ३॥ हस्तेन श्रवणेन वा ॥४॥ अक्षतसूक्तानां दधिघृतमिश्राणां प्रत्यृचं वेदेन जुहुयादिति हैक आहुः ॥५॥ सूक्तानुवाकाद्याः ॥६॥ अध्यायार्षेयाद्याभिरिति

नभ्य......क्तेन ॥ नभ्यस्थे वृषे "मयोभूर्वातः" इति सूक्तेन चानुमन्त्रयते। नभौ भवो नभ्यः। नभ्ये स्थितो नभ्यस्थः। इह मुख्यार्थासम्भवात् गौणकल्पना; नभ्यस्थ इति गवां मध्यस्थे वृषे अनुमन्त्रयत इत्यर्थः। अयमेव च पाठः॥ १०॥

सर्वा......जयेत् ॥ अथ तस्मिन्नहनि सर्वासां गवां पयसि स्थालीपाकं श्रपयित्वा ब्राह्मणान् भोजयेत् ॥ ११ ॥

अथ सप्तमः खण्डः

अथा......रणम् ॥ अथात उपाकरणं[2] वक्ष्यते। उपाकरणमिति स्वस्वाध्यायोपाकरणम्। तथैव च शास्त्रान्तरेषु ॥ १ ॥

ओष......र्भावे ॥ ओषधीनां प्रादुर्भावे तत् कर्तव्यम्, वर्षास्वित्यर्थः। तत्र हि प्रायेणौषधयः प्रादुर्भवन्ति ॥ २ ॥

इदानीमभिमतपक्षप्रदर्शनार्थं विशेषवचनम्—

श्रावण्यां......मास्याम् ॥ श्रावण्यां पौर्णमास्यां तत् कर्तव्यम् ॥ ३ ॥

हस्ते......न वा ॥ तस्मिन्नेव मासे हस्तेन वा श्रवणेन वा ॥ ४ ॥

अक्ष......आहुः ॥ अक्षतसूक्तानां यवसूक्तानां दधिघृतमिश्राणां वेदेन प्रत्यृचं जुहुयात्—इति हैके आचार्या आहुः। आचार्यग्रहणं विस्पष्टार्थम् ॥ ५ ॥

सूक्ता......काद्याः ॥ आदौ भवा आद्याः, सूक्ताद्याभिः अनुवाकाद्याभिः ऋग्भिर्जुहुयाद्वा ॥ ६ ॥

अध्या......केयः ॥ अध्यायाद्याभिरार्षेयाद्याभिश्चतुर्भिः जुहुयादिति माण्डूकेय आह ॥ ७ ॥

१. A[1] and T. काद्याभिरिति वाध्यायार्षे
२. L. उपकरणं
३. A. वात

च माण्डूकेयः ॥७॥ अथ ह स्माह कौषीतकिः वेदेभ्यो देवेभ्यः छन्दोभ्यः ऋषिभ्यश्चेति॥८॥ "अग्निमीळे पुरोहितम्" इत्येका॥९॥ "कुसुम्भकस्तदब्रवीत्" "आवदंस्त्वं शकुने भद्रमावद" "गृणाना जमदग्निना" "धामन्ते विश्वं भुवनमधिश्रितम्" "गन्ता नो यज्ञं यज्ञियाः सुशमि" "यो नः स्वो अरणः" "प्रतिचक्ष्व" "आग्ने याहि मरुत्सखा" "यत्ते राजञ्छृतं हविः" इति द्व्यृचाः ॥१०॥ "तच्छंयोरावृणीमहे" इत्येका ॥११॥ हुतशेषाद्धविः प्राश्य "दधिक्राव्णो अकारिषम्" इत्याचम्योपविश्य महाव्याहृतयः सावित्रीं वेदादिप्रभृति

अथ......भ्यश्च[श्चेति] ॥ अथेदानीं कौषीतकिर्भगवानाचार्यः स्वाभिप्रायं प्राह स्म—वेदेभ्यः देवेभ्यः छन्दोभ्यः ऋषिभ्यश्च ॥ ८ ॥

अग्निमीळे......इत्येका ॥ "अग्निमीळे पुरोहितम्" इत्येका ऋग्भवति ॥ ९ ॥

कुसु...... द्व्यृचाः ॥ द्व्यृचनिवृत्त्यर्थमेकेत्युक्तम् । "कुसुम्भकस्तदब्रवीत्" इत्येवमादयो नव द्व्यृचाः ॥ १० ॥

तच्छं......त्येका ॥ एकेति संशयनिवृत्त्यर्थमुक्तम्; इतरथा तूत्तरसूत्रार्थं वेति संशयो हि स्यात् । इह यावदुक्तं कर्म । अप्रकृतत्वादपूर्वत्वादक्षतसूक्तानाम् ॥ ११ ॥

ततः

हुत......वाच्य ॥ हुतशेषाद्धविरादाय "दधिक्राव्णो अकारिषम्" इत्यनयर्चा प्राश्याचम्योपविश्य महाव्याहृतीः सावित्रीं वेदादिप्रभृति किञ्चित् स्वस्त्ययनानि च सूक्तानीत्यपरार्धानि जपित्वा "अग्निमीळे" इति सूक्तम् स्वस्त्ययनमादौ जपित्वा "आ नो भद्राः" "परावतः" "त्यमूषु" इति सूक्तानि स्वस्त्ययनानि जपति । अथाचार्यः स्वस्ति वाच्य । इह यावदुक्तं स्वस्तिवाचनम् । आचम्योपविश्येति न वक्तव्यम् । आचमनं स्मृतिसिद्धमुपवेशनं च परिभाषासिद्धमिति । एवं तर्ह्याधिकवचनमन्यमर्थं सूचयति, तस्माच्छिष्यस्यापि प्राशनादिर्भवति; इतरथा आचार्यस्यैव ह्यभविष्यत् ॥

१. A[1] and T. देवेभ्यो वेदेभ्यः

२. A[1] and T add समानीवाकृतिरित्येका

३. L. देवेभ्यो वेदेभ्यः

४. A omits च

स्वस्त्ययनानि च जपित्वा, आचार्यं स्वस्ति वाच्य ॥१२॥ तदपि भवति—

उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं भवेत् ।
अष्टकासु तथैव स्यादृत्वन्त्यासु च रात्रिषु ॥१३॥

अथ अष्टमः खण्डः

अथात उत्सर्गः ॥१॥ माघशुक्लपक्षप्रतिपद्यपराजितायां दिशि पुण्ये देशे प्रत्यस्य लोष्टान् "शास इत्था" इति प्रतिदिशमृषींश्छन्दांसि देवताः श्रद्धामेधे च तर्पयित्वा प्रतिपुरुषं पितरः ॥२॥ "उदुत्यम्" "चित्रम्" "नमो

तद..... त्रिषु ॥ तत्र श्लोको भवति—

"उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं भवेत् ।"

क्षपणमित्यध्यायोपरम इत्यर्थः ।

"अष्टकासु तथैव स्यादृत्वन्त्यासु च रात्रिषु ॥"

तथैव स्यात् । उपाकरणानन्तरं त्रिरात्रादूर्ध्वमधीयीत ॥ १३ ॥

अथ अष्टमः खण्डः

अथात उत्सर्गः ॥ अथात उत्सर्गो वक्ष्यते । उत्सर्ग इति स्वाध्यायोत्सर्गः ॥१॥

माघ......तरः ॥ माघशुक्लपक्षप्रतिपदि अपराजितायां प्रागुदीच्यां दिशि पुण्ये देशे "शास इत्था" इत्यनयर्चा प्रत्यस्य लोष्टान् प्रतिदिशम्, चरतु[१]तर्ह्यावर्तेत मन्त्रम्, "लोष्टान्"इति द्रव्यपरत्वाच्चोदनायाः, भिन्नत्वाच्च कर्मणः। ततो यथोक्तमद्भिः ऋषीन् छन्दांसि देवताः श्रद्धामेधे च तर्पयित्वा प्रतिपुरुषं पितरः तर्पयितव्याः। प्रथमानिर्देशः प्रयोगभेदार्थः यथोक्तं च[१] ॥ २ ॥

उदु......न्मासान् ॥ "उदुत्यं जातवेदसम्" "चित्रं देवानाम्" "नमो मित्रस्य" "विभ्राड् बृहत्" इति सूक्तानि जपित्वा ततः प्रभृति अर्धषष्ठान्मासान् छन्दांसि विश्रामयन्ति । आ श्रावण्याः पौर्णमास्या अनध्याय इत्यर्थः ॥ ३ ॥

१. T omits स्वस्ति...तदपि
२. T. Space is left out for writing अथ...माघ
३. A[1] and T. पक्षे
४. L. ह्यर्थावपन्नेत
५. A. तव्यप्रथमा
६. A. विण्याः

मितस्य" "विभ्राड् बृहत्" इति सूक्तानि जपित्वा छन्दांसि विश्रामयन्त्य-र्धषष्ठान् मासान् ॥३॥ अधीयीरंश्चेदहोरात्रमुपरम्य प्राध्ययनम् ॥४॥

अथ नवमः खण्डः

अथोऽपरमम् ॥१॥ उत्पातेष्वाकालिकम् ॥२॥ अन्येष्वद्भुतेषु च ॥३॥ विद्युत्स्तनयित्नुवर्षेषु त्रिसन्ध्यमेकाहम् ॥४॥ श्राद्धभोजने ॥५॥ दशाहमघेषु च

अधी......यनम् ॥ अधीयीरंश्चेत्तदहोरात्रमुपरम्य प्राध्ययनं कुर्यात्, अध्य-यनप्रारम्भणं कुर्यात्; अधीयीतेत्यर्थः । त्रिरात्रं क्षपणमिति प्रागुक्तम् । त्रिविधोऽ-नध्यायविकल्प उत्सर्गे ॥ ४ ॥

अथ नवमः खण्डः

अथोपरमम् ॥ तस्यैवाधीयानस्य उपरमं वक्ष्यामः । अनध्यायं वक्ष्यामः ॥ १ ॥

उत्पा......लिकम् ॥ उत्पातेषूत्पन्नेषु आकालिकं यदा उत्पात उत्पद्यते, अथ श्वोभूतेऽप्या तस्मात् कालादनध्यायः । उत्पात इति विनाशहेतुभूतानामद्भुतानामग्न्यु-त्पातानामाख्या ॥ २ ॥

अन्ये......षु च ॥ आश्चर्यमद्भुतमित्यनर्थान्तरम् । यत् प्रायेणाद्भुतमपूर्वं कदाचिदुद्भवति, तदद्भुतमित्युच्यते । उत्पाताश्चाद्भुतान्येव । तस्मादद्भुतेष्वित्येवं वक्तव्यम्, उभयप्रसिद्धेः । एवं तर्हि पृथग्विधानमन्येष्वद्भुतेष्वनित्योऽनध्यायविधि-रिति ज्ञापनार्थम् ॥ ३ ॥

विद्यु......काहम् ॥ तिसृष्वपि सन्ध्यासु विद्युत्स्तनयित्नुवर्षेषु सत्सु एकरात्रं नाधीयीत ॥ ४ ॥

श्राद्धभोजने ॥ एकाहमित्यनुवर्तते । श्राद्धं भुक्त्वा एकां रात्रिं नाधीयीत ॥

दशा......षु च ॥ अघेषु सूतकेषु च दशाहं नाधीयीत । आशौचाह-मित्यर्थः ॥ ६ ॥

१. A1 and T. मयति
२. A1 and T. प्रागध्ययनम्
३. All except T omit च
४. T. सन्ध्याहमेकाहं
A1 and A2. त्रिषु सन्ध्यामेकाहं
५. A. रत्य
६. L omits पृथक्
७. L omits the sūtra and the commentary thereom.
८. L omits this word.
९. A. शौचाहं

सूतकेषु च ॥६॥ चतुर्दश्यमावास्ययोः ॥७॥ अष्टकासु ॥८॥ वासरेषु नभ्येषु च ॥९॥ आचार्ये चोपरते दशाहम् ॥१०॥ श्रुत्वा त्रिरात्रम् ॥११॥ तत्पूर्वाणां च प्रतिग्रहे श्राद्धे ॥१२॥ सब्रह्मचारिणि समेत्य ॥१३॥ प्रेतमनुगम्य पितृभ्यश्च निधाय पिण्डान् निशाम्॥१४॥ सन्ध्यायाम्॥१५॥ पर्वसु॥१६॥अस्तमिते॥१७॥

चतु......स्ययोः ॥ चतुर्दश्यमावास्ययोर्नाधीयीत ॥ ७ ॥

अष्टकासु ॥ अष्टकासु नाधीयीत । अष्टमीष्वित्यर्थः ॥ ८ ॥

वास......षु च ॥ वासरेष्वित्यर्थः । नभसि भवं नभ्यम् । सकारलोपो यकारप्रत्ययश्च ; नीहारगूढेषु च वासरेषु नाधीयीतेत्यर्थः ॥ ९ ॥

आचा........शाहम् ॥ आचार्ये उपरते दशाहं नाधीयीत ॥ १० ॥

श्रुत्वा......त्रिरात्रम् ॥ दशाहादूर्ध्वं श्रुत्वा त्रिरात्रं नाधीयन्ति ॥ ११ ॥

तत्पू......श्राद्धे ॥ तत्पूर्वाणां श्राद्धपूर्वाणां द्रव्याणां प्रतिग्रहे च त्रिरात्रं नाधीयीत ॥ १२ ॥

स ब्र......मेत्य ॥ समेत्य सब्रह्मचारिणा तस्मिन् सब्रह्मचारिणि नाधीयीत । अनुज्ञातो वाधीयीत ॥ १३ ॥

प्रेत... ...न्निशाम् ॥ प्रेतमनुगम्य पितृभ्यो निधाय पिण्डान् निशामेकां नाधीयीत ॥ १४ ॥

सन्ध्यायाम् ॥ सन्ध्ययां नाधीयीत ॥ १५ ॥

पर्वसु ॥ पर्वसु नाधीयीत ॥ १६ ॥

अस्तमिते ॥ आदित्ये च अस्तमिते नाधीयीत । सन्ध्यायामित्येवेदं सिद्धम् । तस्मादस्तमित इति समीपवाची । अधिवृक्षसूर्यकाले नाधीयीतेत्यर्थः ॥ १७ ॥

१. T omits सूतकेषु च
२. A[1] and T. अग्रेषु
३. All except A[2]. तत्पुत्राणां
४. T and A[1]. चारी
५. A. नीहारगुह्येषु वास
६. L omits अनुज्ञातो वाधीयीत
७. A. अधिकवृक्ष-

सामशब्दे ॥१८॥ श्मशाने ॥१९॥ शूद्रसंनिकर्षे ॥२०॥ ग्रामारण्ये ॥२१॥ अन्तः-शवे ग्रामे ॥२२॥ अदर्शनीयाश्रवणीयानिष्टाघ्राणे ॥२३॥ अतिवातेऽभ्रे वर्षति ॥२४॥ रथ्यायाम् ॥२५॥ बाणशब्दे ॥२६॥ रथस्थः ॥२७॥ शूद्रवच्छुनि ॥२८॥ वृक्षारोहणे ॥२९॥ अवटारोहणे ॥३०॥ अप्सु ॥३१॥ क्रन्दत्याम् ॥३२॥

सामशब्दे[2] ॥ सामशब्दे नाधीयीत । न हि साम अनध्यायहेतुः; तथोक्तम्—"ऋग्यजुषां च सामशब्दः" इति ॥ १८ ॥

श्मशाने ॥ श्मशाने नाधीयीत ॥ १९ ॥

शूद्रसन्निकर्षे ॥ शूद्रसन्निकर्षे नाधीयीत ॥ २० ॥

ग्रामारण्ये ॥ ग्रामारण्ये नाधीयीत ॥ २१ ॥

अन्त......ग्रामे ॥ अन्तःशब्दो मध्यवाची । अन्तश्शवे ग्रामे नाधीयीत ॥२२॥

अद......घ्राणे ॥ अदर्शनीयाश्रवणीयानिष्टाघ्राणे नाधीयीत पूतिगन्धादिषु ॥

अति......र्षति ॥ अभ्रे वर्षति अतिवाते[4] नाधीयीत । वर्षतीत्युक्ते अभ्र इति गम्यते । तस्मादभ्र इति न वक्तव्यम् । एवं तर्हि द्वावनध्यायहेतू—अतिवातेऽभ्रे नाधीयीत; वर्षति नाधीयीत इति । अथवा त्रयोऽनध्यायहेतवः कल्परूपाः[5]—अति-वाते नाधीयीत, अभ्रे, वर्षति । एवं च सत्यध्ययनक्षय एव स्यात् । प्रायेण हि साभ्रं नभः । तस्माद् द्वौ हेतू इति ब्रूमः ॥ २४ ॥

रथ्यायाम् ॥ रथ्यायां महामार्ग इत्यर्थः ॥ २५ ॥

बाणशब्दे ॥ बाणशब्दे तन्त्रीस्वरे नाधीयीत ॥ २६ ॥

रथस्थः ॥ रथस्थश्च नाधीयीत ॥ २७ ॥

शूद्रवच्छुनि ॥ शूद्रवदिति शूद्रस्य शुनश्च साधर्म्यज्ञापनार्थम् । तस्मात् "शुनोपहतः सचेलस्नातः" इत्येवमादयो विधयः शूद्रस्पर्शनादिष्वपि भवन्ति ॥२८॥

वृक्षारोहणे ॥ वृक्षमारुह्य च नाधीयीत ॥ २९ ॥

अ......त्याम् ॥ नाधीयीत ॥ ३०—३२ ॥

१. T adds मेघे A[1] adds मे
२. L omits सामशब्दे
३. A adds ऋच वायं दूर्वा
४. A. अतिपाते
५. A. कल्याः अतिपाते

आर्तौ॥२३॥नग्नः॥२४॥उच्छिष्टः॥२५॥संक्रमे॥२६॥केशश्मश्रुवापन आ स्नानात्॥ ३७॥ उत्सादने ॥३८॥ स्नाने ॥३९॥ अभ्यञ्जने ॥४०॥ संवेशने सूतिकोदक्याभ्याम् ॥४१॥ अवहितपाणिः ॥४२॥ सेनायाम् ॥४३॥ अभुञ्जति[1] ब्राह्मणे[2] ॥४४॥

आर्तौ ॥ आर्तिरित्यार्तसंयुक्त उच्यते ॥ २३ ॥

नग्नः ॥ नग्नो नाधीयीत ॥ २४ ॥

उच्छिष्टः ॥ उच्छिष्टो नाधीयीत ॥ २५ ॥

[संक्रमे[3] ॥ नाधीयीत ॥ २६ ॥

केश......नात् ॥ केशादीनां वापने आ स्नानात् नाधीयीत ॥ ३७ ॥

उत्सादने ॥ उत्सादनमुद्वर्तनम् । तस्मिन् नाधीयीत ॥ ३८ ॥][4]

स्नाने ॥ स्नाने नाधीयीत ॥ ३९ ॥

अभ्यञ्जने ॥ अभ्यञ्जने नाधीयीत ॥ ४० ॥

संवे......क्याभ्याम् ॥ सह उपवेशनं संवेशनम्; सूतिकया संवेशने उदक्यया च संवेशने नाधीयीत ॥ ४१ ॥

अव......पाणिः ॥ अवहितपाणिर्नाधीयीत । अवहितपाणिरिति पृष्ठतः-सहितोभयपाणिरुच्यते ॥ ४२ ॥

सेनायाम् ॥ सेनायां नाधीयीत ॥ ४३ ॥

अभु......ह्मणे ॥ भोजनार्हे ब्राह्मणे भोक्तुकामे च केनचित्कारणेनाभुञ्जति सति तस्य संविधे[5] नाधीयीत । अभुञ्जतीति किमेतद्रूपम्? ननु शत्रन्तं न भवति, परस्मैपदत्वात् । "भुजोऽनवने" इति ह्यात्मनेपदविधानम्; नैष दोषः । छान्दसमेतद्रूपम् । "छन्दोवत्सूत्रम्" इति । अभुक्तवतीति वा पाठः ॥ ४४ ॥

१. T. भुञ्जन्ति

२. T. ब्राह्मणेषु

३. A and L omit this sūtra.

४. The portion within brackets is omitted in both the copies of the commentary.

५. A. समीपे

गोषु च॥४५॥अतिक्रान्तेष्वधीयीरन्॥४६॥एतेषां यदि किञ्चिदकामभ्याभवेद्वा प्राणानायम्यादित्यं निरीक्ष्यातः परमधीयीत ॥४७॥ विद्युत्स्तनयित्नुवर्षवर्जं कल्पे ॥४८॥ वर्षवर्जमर्धषष्ठेषु च ॥४९॥ तदप्येतत् ।

अन्नमापो मूलफलं यच्चान्यच्छ्राद्धिकं भवेत् ।
प्रतिगृह्याप्यनध्यायः पाण्यास्या ब्राह्मणाः स्मृताः ॥

गोषु च ॥ अभुक्तवत्सु गोषु च केनचित्कारणेन अवरुद्धेषु तेषां समीपे नाधीयीत ॥ ४५ ॥

अति......यीरन् ॥ अवहितकालानामनध्यायहेतूनां कालनियमः क्रियते । अतिक्रान्तेष्वधीयीरन् । अतिक्रान्तेषु तदहरेव पुनरधीयीत ॥ ४६ ॥

एते......यीत ॥ एतेषामनध्यायकारणानां किञ्चित् कारणमभ्याभवेदधीयानेषु, प्राणानायम्यातमेनान्मदासित्वा[?]आदित्यं निरीक्ष्यातः परमधीयीत ॥ ४७ ॥

विद्युः......कल्पे ॥ विद्युत्स्तनयित्नुवर्षाः त्रयोऽनध्यायहेतव उक्ताः । तान् वर्जयित्वा इतरेऽनध्यायहेतवो भवन्तीति । कल्प इति कृतक इति वेदावयवस्य आख्या ॥

वर्ष......षु च ॥ वेदानामिति च अर्धषष्ठेषु मासेषु अध्ययनकर्षेषु[कालेषु] सत्सु वर्षवर्जमनध्यायहेतवो भवन्ति । एतदेव विद्युदादीनां पृथक्त्वे तु कारणम् । अतिवाते अभ्रे वर्षतीत्यस्य वा प्रतिषेधः । उभयोर्वा वर्षवर्जमित्यविशेषवचनात्॥४९॥

तद......स्मृता इति ॥ तदिति तत्रेत्यर्थः । एतदपि भवति—

"अन्नमापो मूलफलं यच्चान्यच्छ्राद्धिकं भवेत् ।
प्रतिगृह्याप्यनध्यायः पाण्यास्या ब्राह्मणाः स्मृताः ॥"

इति भक्षादिप्रतिग्रहणे पाण्यास्या ब्राह्मणाः स्मृता इति हेतुवचनम् ॥ ५० ॥

१. $A^2$ adds कारणानां
२. T. कामं
३. $A^2$. भ्यायेत्
४. T and $A^1$. निरीक्षेत
५. T and $A^1$. अथ
६. A. तमनादासित्वा
७. A. ध्यायवाण्या
८. A. वाण्या

इति ॥५०॥ [1]न्यायोपेतेभ्य [2]एवावर्तयेत् ॥५१॥ प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ॥५२॥ द्वौ वा ॥५३॥ भूयांसस्तु यथा[3]सनम् ॥५४॥ 'अधीहि भो' इत्युक्त्वा आचार्यः 'ओ३म्' इतीतरः प्रतिपद्याधीयी[4]त ॥५५॥ अधीत्योपसंगृह्य 'विरताः स्म भो' इत्युक्त्वा यथार्थम् ॥५६॥ विसृष्टं विरामस्तावदित्येके ॥५७॥ नाधीयीतारमन्तरा गम[5]येदात्मानं परिहरन्तोऽधीयीरन् ॥५८॥

न्यायो......र्तयेत् ॥ न्यायोपेतेभ्य एवावर्तयेत् । वेदं द[6]द्यादित्यर्थः । उपनयनव्रतनियमादिसंयुक्तेभ्योऽन्यैश्च शुश्रूषादिभि[7]ः शिष्यगुणैर्युक्तेभ्य एव विद्यां दद्यात् । नान्येभ्योऽसूयादिसंयुक्तेभ्यः । तदुक्तम्—"विद्या ह वै ब्राह्मणमाजगाम" इति द्वाभ्यां श्लोकाभ्याम् ॥ ५१ ॥

प्राङ्मु......तरः ॥ अध्यापनविधिं वक्ष्यामः । प्राङ्मुख आचार्य उपविशेत्; प्रत्यङ्मुख इतरः ॥ ५२ ॥

द्वौ वा ॥ द्वौ चेद् द्वौ प्रत्यङ्मुख उपविशतः ॥ ५३ ॥

भूयां......सनम् ॥ यदि भूयांसः शिष्याः स्युः यथासनं यथावकाशमासते ॥

[8]अधी......यीत ॥ 'अधीहि भो' इत्यु[9]क्त्वा आचार्य आह । ओमित्युक्त्वा इतरः प्रतिपद्य आरभ्येत्यर्थः । अधीयीत । "ओमभ्यादाने" इति शास्त्रान्तरे प्लुतविधानम् । इहैव वा प्लुतेन पाठः । ओम् इति प्लुतं कृत्वा आह ॥ ५५ ॥

अधी......थार्थम् ॥ अधीत्य पुनराचार्यमुपसंगृह्य अभिवाद्येत्यर्थः । 'विरता स्म भो' इत्युक्त्वा यथार्थं यथाप्राप्तं शुश्रूषादि कर्म करोति ॥ ५६ ॥

विसृ......त्येके ॥ अधीत्यैव विसृष्टमित्येके, विरामस्तावदित्येक ॥ ५७ ॥

नाधी......त्मानम्[यीरन्] ॥ ते चापि व्यवायं परिहरन्तोऽधीयीरन् येन केनचित् ॥ ५८ ॥

१. T and A¹. न्यायो वेदेभ्यः
२. T. एवं वर्तयेरन्
IO and A². एवं वर्तये
३. T and A¹. यथासुखं
४. T' and A¹. अधीयीरन्
५. A¹. गमने चात्मानं
६. L. दद्यामित्यर्थः
७. A. दिशिष्य
८. L omits this sūtra.
९. A omits उक्त्वा

यदि चेद् दोषः स्यात् त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीं चाभ्यावर्त-यित्वा यावच्छक्नुयात् ॥५९॥ दण्डस्यान्तरागमने ब्राह्मणाय यत् किञ्चिद्दद्यात्। अतः परमधीयीत ॥६०॥

अथ दशमः खण्डः

अथातो वैश्वदेवः॥१॥ वैश्वदेवस्य सिद्धस्य सायंप्रातर्गृह्येऽग्नौ जुहुयात्॥२॥

यदि चेत्......शक्नुयात् ॥ दोषो यदि चेत् स्यात्, अन्तरागमनं यदि चेत् स्यादित्यर्थः। त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीं चाभ्यावर्तयित्वा यावच्छक्नुयात् तावदधीयीतेत्यर्थः ॥ ५९ ॥

दण्ड......यीत ॥ दण्डस्यान्तरागमने चैतदेव कृत्वा ब्राह्मणाय दद्यात्। दानमुभयत्र। अतः परमधीयीत ॥ ६० ॥

अथ दशमः खण्डः

अथातो वैश्वदेवः ॥ अथेदानीं वैश्वदेवो वक्ष्यते। वैश्वदेव इति कर्मनामधेयम्॥

वैश्व......हुयात् ॥ वैश्वदेवस्य वैश्वदेवार्थसिद्धस्य सायंप्रातर्गृह्येऽग्नौ वक्ष्यमाणैर्मन्त्रैर्जुहुयात्। गृह्य इत्यौपासननिवृत्त्यर्थमुक्तम्। न हि वैश्वदेव इति द्रव्यं प्रसिद्धमस्ति। यददनीयं गृहे प्रसिद्धम्, तदेव वैश्वदेवशब्देनोच्यते। न वैश्वदेवार्थम्, सर्वार्थं इति च प्रदर्शनार्थम्; प्रयोजनं नान्नप्रयुक्तो वैश्वदेव इति। तस्मादसत्यन्नसमर्थे द्रव्ये वैश्वदेवसमर्थे च सति वैश्वदेव एव च कर्तव्यः। सिद्धस्य हविष्यस्य जुहुयादिति केचिदाहुः; तस्मात् क्षारलवणमधुमांसवर्जम्। अथवा यदश्नाति तद्धविः स्यात्; तदुक्तम्—"यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः" इति। किन्तु यत्प्रधानं क्षुत्प्रतिघातार्थमोदनादिकं तद्धविर्भवति, न शाकसूपादि, तदभ्यवहरणोपायार्थत्वात्। शाकादीनि च स्वप्रधानत्वे यः शाकमेवाश्नाति तस्य तद्धविः स्यादेव। यदन्नकार्ये मुख्यं तस्य जुहुयात्। किमभिघार्य जुहुयात्? "नासंस्कृतेन जुहुयात्" इति वचनात्। घृताभावे अद्भिर्वा प्रोक्ष्य जुहुयात् ॥ २ ॥

१. T adds अहरहः
२. T adds तावत्
३. A[2] omits यत्
४. T and A[1] omit अतः
५. A. प्रतिसिद्धं

"महान्तं कोशम्" इति त्रिः पर्युक्षति सर्वत्र ॥३॥ "अग्नये स्वाहा" "सोमाय स्वाहा" "इन्द्राग्निभ्यां स्वाहा" "भरद्वाजधान्वन्तरये स्वाहा" "प्रजापतये स्वाहा" "अनुमत्यै स्वाहा" "श्रियै स्वाहा" "सरस्वत्यै स्वाहा" "विष्णवे स्वाहा" "विश्वेभ्यो देवेभ्यः स्वाहा" "सर्वाभ्यो देवताभ्यः स्वाहा" "अग्नये स्विष्टकृते स्वाहा" इति हुत्वैतासां देवतानाम् । अथ वास्तुमध्ये बलिं हरेत् ॥४॥ एताभ्यश्चैव देवताभ्यो नमो ब्रह्मणे ब्राह्मणेभ्यश्च वास्तोष्पतये नमः ॥५॥

महा......र्वत्र ॥ "महान्तं कोशम्" इत्यनयर्चा त्रिः पर्युक्षत्यग्निं सर्वत्र । अन्यत्रापि पर्युक्ष्य सुसमिद्धे जुहोति इत्येवंविधेषु अनया त्रिस्त्रिः पर्युक्षति । ननु—प्रकृतिवदिति पर्युक्षणं प्राप्तम्, ओदनत्वात् । स्थालीपाकत्वात् न प्रकृतिरिह भवति, अतद्भूतोपदेशत्वात् । यदि स्यात्, स्थालीपाकस्येत्यवक्ष्यत् । हविषो व्यभिचारात् स्थालीपाकस्येत्यनुक्तमिति चेत्, पर्युक्षणविधानान्न भवति । उत्तरत्र च वक्ष्यामः—यावदुक्तमिह कर्मेति ॥ ३ ॥

अग्न......हरेत् ॥ स्वाहाकारविधानं किमर्थम्? स्वाहाकारविधाने नमस्कार इति । तच्च विधातव्यम् । पुरस्तान्नमस्कारा उपरिष्टान्नमस्काराश्च मन्त्रा दृश्यन्ते । हुत्वेति न वक्तव्यम्, विहितत्वात् संशयनिवृत्त्यर्थम् । अत ऊर्ध्वं बलिहरणमिति । अथवा परिसङ्ख्यार्थम्, एता एव देवता हुत्वा ; न प्रकृतिवदिति । अथैतासां देवतानामग्न्यादीनां वास्तुमध्ये बलिं हरति ॥ ४ ॥

एताभ्यः......नमः ॥ एताभ्यश्च वक्ष्यमाणाभ्यो देवताभ्यो वास्तुमध्ये बलिं हरति । यथा वक्ष्यमाणा एवमेव पुर्वोक्ताः स्युरपीति अग्न्यादीनामपि नमस्कारनियमसंस्कारार्थमेव करणं कृतम् । तस्मात् 'अग्नये नमः' 'सोमाय नमः' इत्येवमेव पूर्वोक्ताः स्युः, 'अग्नये स्विष्टकृते नमः' इति । अत ऊर्ध्वम् 'नमो ब्रह्मणे ब्राह्मणेभ्यश्च' इति । चशब्दः पुरस्तान्नमस्कारानुकर्षणार्थम् 'नमो ब्राह्मणेभ्यः' इति ; वास्तोष्पतये

१. T omits सोमाय...प्रजापतये स्वाहा
२. All except T omit स्वाहा
३. T. भरद्वाजाय धन्वन्तरये स्वाहा
४. A[1] and T omit हुत्वा
५. T adds हुत्वा
६. T. Space is left out for writing नमो ब्रह्म
७. T adds नमो
८. A. कारे विधाने न
९. A adds देवतानां

अथ दिशां प्रदक्षिणं यथारूपम् "नम इन्द्राय ऐन्द्रेभ्यश्च" "नमो यमाय याम्येभ्यश्च" "नमो वरुणाय वारुण्येभ्यश्च"[1] "नमः सोमाय सौम्येभ्यश्च" "नमो बृहस्पतये बार्हस्पत्येभ्यश्च" ॥६॥ "नमो मरुद्भ्योऽश्विभ्याम्[2]" "नमश्छन्दोभ्य ऋषिभ्यश्च" इत्यपराजितायां[3] दिशि ॥७॥ "नमस्सन्ध्यायाग्नये[4]" "नमो निर्ऋत्यै[5]" "नमो वायवे" "नमो रुद्राय" इति प्रदक्षिणमेव ॥८॥

नमः। देशान्यत्वान्नमस्कारविधानमग्न्यादिभ्यो देवताभ्यः सहैवापो दत्त्वा पुष्पाणि च प्राचीरितः कार्या हुतशेषेण, "प्राङ्न्यायानि देवकर्माणि" इति वचनात् ॥ ५ ॥

अथ......भ्यश्च ॥ अथेदानीं दिशां यथारूपं प्रदक्षिणं बलिं हरति। यथारूपमिति देवतासंबन्धे, यथादृष्टं तथा यमवरुणसोमानां दक्षिणस्यां प्रतीच्यामुदीच्यां च दर्शनात्। परिशेषात् प्रथमविधानात् प्रदक्षिणविधानाच्च इन्द्राय प्राच्यां भवति। मध्यमरीत्या शेषं पृथगपो दत्त्वा इन्द्रायैन्द्रेभ्यश्चेति। चशब्दः पुरस्तान्नमस्कारार्थः। एवमिह सर्वचशब्दार्थोऽवधार्यः। प्राङ्न्यायत्वमेव अनेकेषु सह अपोदानार्थं च सह चोदितानाम्। तथा दक्षिणस्यां यमयाम्यौ; तयोर्दक्षिणतो मध्यमरीत्या। उत्तरतः बृहस्पतिबार्हस्पत्यौ; ऊर्ध्वायामिति दृष्टत्वात्तयोर्मध्ये विधानम् ॥ ६ ॥

नमो......दिशि ॥ अपराजितायां दिशि सौम्यदेशात्[6]प्रागित्यर्थः, मरुदादयश्चत्वारः ॥ ७ ॥

नमः......मेव ॥ एवकारकरणं दिशां यथारूपमेवेति पृथक्प्रदानार्थं प्रतिदेवतं नमस्कारविधानम्। तस्मात्पृथग् अपोदानम्। दक्षिणपूर्वस्यां दिशि सन्ध्यायामग्नये[7], दक्षिणपश्चिमस्यां दिशि निर्ऋत्यै, उत्तरपश्चिमस्यां दिशि वायवे, प्रागुत्तरस्यां दिशि रुद्राय प्रदक्षिणम् इति चोक्तम् ॥ ८ ॥

१. A[1] and T. वारुणेभ्यश्च
२. All mss. read अश्विभ्यः
३. T adds अथ
४. T. स्वाध्याय
५. T. Space is left out for this word.
६. A. सौम्यं दशात्
७. A. सन्ध्यायां नये

अथादित्यमण्डले "नमोऽदितये आदित्येभ्यश्च नमो नक्षत्रेभ्य ऋतुभ्यो नमो मासेऽभ्योऽर्धमासेभ्यश्चाहोरात्रेभ्यश्च संवत्सरेभ्यः पूष्णे पथिकृते धात्रे विधात्रे" इति ॥९॥ मरुद्भ्यश्चैव देहनेषु ॥१०॥ "नम ओषधिवनस्पतिभ्यः" इत्युलूखले "नमः पर्जन्यायाद्भ्यः" इति मणिके ॥११॥ "विष्णवे" दृषदि ॥१२॥ नमः श्रियै शय्यायाः शिरसि ॥१३॥ पादतो भद्रकाळ्यै ॥१४॥ अनुगुप्ते देशे "नमो मित्राय" ॥१५॥ "नमो विज्ञाताभ्यो देवताभ्यः" इत्युत्तरतो धनपतये च ॥१६॥ अथान्तरिक्षे "नक्तंचरेभ्यो नमः" इति सायम् ॥१७॥ "अहश्चरेभ्यो नमः" इति

अथा......इति ॥ आदित्यमण्डले आदित्यादीनाम् 'नमो नक्षत्रेभ्यः' इति पुरस्तान्नमस्कारस्यैव प्रत्यक्षविधानार्थम्। पूर्वयोः सहापो दातव्याः। ततो नक्षत्रादीनाम् अर्धमासेभ्यश्च इत्यस्थानपरिपठिताश्चशब्दाः। विधात्रे च इति तत्र योज्यम् ॥९॥

मरु......नेषु ॥ नमस्कारप्रयुक्तत्वान्नोक्तः नमो मरुद्भ्य इति। एवकारकरणं बहुत्वावधारणार्थम्। देहनेष्वेव भेदनेषु न क्रियते, नोलूखलादिबहुत्वेऽपीति। तस्मादुलूखलाश्चेत्येकस्मिन्नेव क्रियते ॥ १० ॥

नम......णिके ॥ पर्जन्यायाद्भ्य इति एक एव मन्त्रः, चशब्दाभावात् ॥११॥

विष्ण......पदि ॥ विष्णवे नमः। प्रयुक्त एव ॥ १२ ॥

नमः......ळ्यै ॥ नमो भद्रकाळ्या इति भवत्यानन्तर्यात् ॥ १३—१४ ॥

अनुगु......त्राय ॥ अनुगुप्ते देशे भूमौ। तस्मादेव च स देशो मैत्र इत्युच्यते ॥

नमो वि......तये च ॥ अथोत्तरतः "नमो विज्ञातेभ्यो देवताभ्यः" "नमो धनपतये च" इति सहैव द्वौ भवतः ॥ १६ ॥

अथान्त......सायम् ॥१७॥

अह......प्रातः ॥१८॥

१. A[1] and T. गेहनेषु
२. T. न्याभ्यः
३. A[2]. शय्यायां शिरसि
४. A[1] and T add एवं
५. L. प्रयुक्तता नोक्ता
६. L. नेत्वेव
७. A omits नमो भद्रकाळ्यै
८. A. सन्देशो

वैश्वदेवः



प्रातः ॥१८॥ "ये देवासः" इति च ॥१९॥ अथ प्राचीनावीती दक्षिणतः शेषं निनयेत् "येऽग्निदग्धाः" इति ॥२०॥ देवर्षिपितृगणेभ्यो दत्त्वातिथिमाकाङ्क्षेद् आ गोदोहात् ॥२१॥ यद्यतिथिरागच्छेद् यथाशक्ति पाद्यमासनमन्नं दत्त्वा श्रोत्रियं भोजयेत् ॥२२॥ ब्रह्मचारिणे वा भिक्षां दद्यात् ॥२३॥ अनन्तरं सौवासिनीं गर्भिणीं बालान् स्थविरांश्च भोजयेत् ॥२४॥ श्वभ्यश्च श्वपाकेभ्यश्च

ये दे......इति च ॥ "ये देवासो दिव्येकादश स्थ" इत्यनयर्चा सायंप्रातरन्ते नमस्कारः ॥ १९ ॥

अथ......ग्निदग्धा इति ॥ अथ प्राचीनावीतीभूत्वा दक्षिणतः शेषं निनयेत् "येऽग्निदग्धाः" इति ॥ २० ॥

देव......दोहात् ॥ देवर्षिपितृगणेभ्यो दत्त्वा । प्रकृतस्योपसंहारवचनम् । पञ्चयज्ञेषु गणनार्थमतिथिमाकाङ्क्षेद् गवामा दोहात् ॥ २१ ॥

यद्यतिथिरागच्छे......त् ॥ तस्मिन्काले यद्यतिथिरागच्छेत् तस्मै यथाशक्ति स्वगृह्यानुपरोधेन विशेषेणात्मनश्चाननुपरोधेन—आत्मायत्तं हि कृत्स्नं कर्म—पाद्यमासनं दत्त्वा—ददातीत्यर्थः । श्रोत्रियश्चेदागच्छेत् तं सर्वयत्नेन पूजयेत् ॥ २२ ॥

ब्रह्म......दद्यात् ॥ ब्रह्मचारिणे भिक्षां वा दद्यात् । तेन चास्यातिथिपूजना कृता स्यात् । आ गोदोहादूर्ध्वमपि प्राग्भोजनादतिथिरागच्छेत्, यथाशक्ति दद्यादेव ॥ २३ ॥

अनन्त......जयेत् ॥ ततोऽनन्तरमेव । सौवासिनी कुमारी वधूर्वा । सौवासिनीं गर्भिणीं बालान् स्थविरांश्च भोजयेत् ॥ २४ ॥

श्वभ्य......विति ॥ एतेभ्यो भूमावावपेत् । इतिशब्दः प्रकारवाचि । पतितानां च भूमौ निर्वपेत् ॥ २५ ॥

१. A[1] and T. गोदोंहात्
२. T omits ब्रह्म...स्थविरांश्च भोजयेत्
३. A[1] omits वा
४. A. प्रातरन्ते
५. A. आत्मा यत्तहि
६. A. आवपेत्

वयोभ्यश्चावपेद् भूमाविति ॥२५॥ नानवत्तमश्नीयात् ॥२६॥ नैकः ॥२७॥ न पूर्वम् ॥२८॥ तदप्येतदृषिराह ॥२९॥

"मोघमन्नं विन्दते अप्रचेतास्सत्यं ब्रवीमि वध इत्स तस्य ।

नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥"इति॥३०॥

षण्णामर्घ्याणामन्यतम आगच्छेद् गोपशुमजमन्यद्वा यत्सामान्यतमं मन्येत तत्कुर्वीत ॥३१॥ आचार्यायाग्नेयः ऋत्विजे बार्हस्पत्यो विवाह्याय प्राजापत्यो राज्ञ ऐन्द्रः प्रियाय मैत्रः स्नातकायैन्द्राग्नः ॥३२॥ यद्यसकृत्संवत्सरस्य

नान......श्नीयात् ॥ अनवत्तमहुतं अकृतवैश्वदेवमित्यर्थः, नाश्नीयात् ॥ २६ ॥

नैकः ॥ एकश्च नाश्नीयात् । अतिथिद्वितीय एवाश्नीयादित्यर्थः ॥ २७ ॥

न पूर्वम् ॥ पूर्वमेनेभ्यो दत्वा अश्नीयात् । उक्तस्यैवार्थस्य उपसंहारवचनमृङ्नियमनार्थम् ॥ २८ ॥

तद......राह ॥ "नानवत्तमश्नीयान्नैको न पूर्वम्"इति यदुक्तं तदृषिरप्याह ॥

मोघ......दीति ॥ ऋगर्थं नैरुक्ताः प्रष्टव्याः ॥ ३० ॥

षण्णां .....र्वीत ॥ "षळर्घ्या भवन्ति" इति ये अर्घ्या उक्ताः, तेषामन्यतमोऽतिथिर्यदागच्छेत्, तस्य गोपशुमजमन्यद्वा यत्सामान्यतमं मन्येत, तत्कुर्वीत । तत्पचेदित्यर्थः । इह सामान्यतममिति कार्यसामान्यं मांसजातमित्यर्थः । इह विद्यमानस्य प्रतिनिधिवचनम् ॥ ३१ ॥

आचा......न्यः ॥ स पशुराचार्यायाग्नेयः स्यात् । एवमुत्तरेषामपि यथावचनम् । विवाह्य इति श्वशुरः । आचार्यर्त्विक्श्वशुर इति तृतीयः श्वशुर उक्तः । षण्णामित्युक्तत्वाच्च श्वशुर एव विवाह्यः ॥ ३२ ॥

यद्य......येयुः ॥ संवत्सरस्येति सप्तम्यर्थे षष्ठी । एकस्मिन्संवत्सरे अनेकशः सोमेन यदि यजेत कृतार्घ्या एवैनमृत्विजो याजयेयुः ॥ ३३ ॥

१. A[1] and T. वैवाह्यः
२. A[1] and T. ऐन्द्राग्न्योः
३. A. ऋणां

वैश्वदेवः



सोमेनं यजेत कृतार्घ्या एवैनं याजयेयुः ॥३३॥ नाकृतार्घ्याः ॥३४॥ तदपि भवति[२] —

मधुपर्के च सोमे च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥
आचार्यश्च पिता चोभौ सखा चानतिथिर्गृहे[३] ।
ते यद्विदध्युस्तत्कुर्यादिति धर्मो विधीयते ॥
नैकग्रामीणमतिथिं विप्रोष्यागतमेव[४] वा ।
उपस्थितं गृहं विद्याद्भार्या यत्राग्नयोऽपि वा ॥

नाकृतार्घ्याः ॥ अकृतार्घ्या न याजयेयुः । तथेतरे यज्ञकर्मणि ऋत्विजोऽन्यत्र संवत्सरे सकृदेव अर्घ्या भवन्ति—इत्येतदुक्तं भवति ॥ ३४ ॥

तदपि भवति मधु......रिति ॥ मधुपर्के च सोमे इति लक्षणा । न हि सोमकर्मणि हिंसाकर्म विद्यते, तदङ्गभूतेषु तु कर्मसु विद्यते; तस्मात् सोमे इति लक्षणया श्रौतेषु पशुकर्मस्वित्यर्थः । पितृदैवतकर्मणीति वचनान्मत्स्यमांसप्रकारसंयुक्तमन्नं ब्राह्मणेभ्यः स्यात् । अष्टकासु पितृकर्मैव । दैवतकर्मणि—इदानीं दैवतकर्मणि इति लौकिके देवयागे उपहारादौ इति । अत्रैव पशवो हिंस्याः नान्यत्रेत्यब्रवीन्मनुः । अहिंसालक्षणो धर्म इत्युत्सर्गः । एतेभ्यः कारणेभ्योऽन्यत्र विशेषेण प्राणिदया कार्या ॥

अनतिथिरिति चतुर्थोऽयं प्रतिषेधः । एते अतिथिकार्ये न नियोज्या इत्यर्थः । एतेषु गृहेष्वागतेषु । किन्तु ते अस्मै यत्कार्यं विदध्युः तत्कुर्यादिति धर्मो विधीयते ॥

एकग्रामिकमेकग्रामनिवासिनमित्यर्थः । अतिथिं न कुर्यात् विप्रोष्यागतमेव वा तमपि विप्रोष्यागतं कुर्याद्वा दक्षिणेत्यर्थः । जातस्याख्या प्रभूता दक्षिणा यत्र इति विगृह्य निष्कोशाम्बिवत्समासः । गृहे वैश्वदेवकरणार्थं गृहलक्षणविधानम् । भार्या यत्र तत्र वा गृहसंज्ञा । अपि वा अग्नयो यत्र तत्र वा ॥

१. A[1] and T. सोमवता
२. A[1] and T add तदपि श्लोकाः
३. A[1] and T. भवेत्
४. A[1] and T. विप्रोष्य गृहमेव
५. A[1] and T. प्रदक्षिणं
६. A adds पशुषु
७. L. होमः
८. A. न हि योज्याः
९. A. तत्र
१०. A omits this word.

नोपवासः प्रवासेऽस्ति पत्नी धारयते व्रतम् ।
पुत्रो भ्राताथ वा शिष्यः पत्नी वाथ बलिं हरेत् ॥
अग्निहोत्रं बलीवर्दाः काले चातिथिरागतः ।
बालाश्च कुलवृद्धाश्च निर्दहन्त्यवमानिताः ॥
देवताः पितरो नित्यं गच्छन्ति गृहमेधिनम् ।
भागार्थमतिथिश्चापि तेभ्यो निर्वप्तुमर्हति ॥
सिलान्युञ्छयमानस्य अग्निहोत्रं च जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो व्रजन् ॥
औदपात्रात्तु दातव्यमा काष्ठाज्जुहुयादपि ॥
आ सूक्तादानुवाकाद्वा ब्रह्मयज्ञो विधीयते ।

प्रवासे गृहस्थस्योपवासो न विद्यते । प्रकृतस्योपवासस्य प्रवासे प्रतिषेधः । पत्नी प्रवसतो भर्तुर्व्रतं धारयते । प्रवास इत्यधिकारः । पुत्रादीनामन्यतमो वैश्वदेवं कुर्यात्॥

अग्निहोत्रमित्यनया उच्यन्ते[१] । निर्दहन्तीति निन्दाप्रतिषेधार्था । तेषामवमानो न कार्यः श्रेयस्कामेनेति ॥

देवताः पितरः अतिथिं च गृहमेधिना गृहस्थं नित्यमभिगच्छन्ति भागधेयार्थम्। तेभ्यो निर्वप्तुमर्हति गृहस्थः ॥

सिलोञ्छवृत्तेरग्निहोत्रिणोऽपि सर्वं सुकृतमादत्ते, किं पुनरन्येषामित्यातिथ्यस्तुतिः ॥

आ उदपात्रादपकर्षतो दातव्यमेवातिथये। अपकर्षत आ काष्ठां जुहुयादिति वैश्वदेवचोदना । अनेन काष्ठेनापि वैश्वदेवं कुर्यादेवेति वैश्वदेवस्य नित्यत्वमाह अपकर्षत एव ॥

आ सूक्तादनुवाकाद्वा ब्रह्मयज्ञो विधीयत इति । नित्यस्वाध्यायो ब्रह्मयज्ञः । एते पञ्चमहायज्ञाः—अतिथिपूजना मनुष्ययज्ञः, देवयज्ञः वैश्वदेवेन यो यज्ञः

१. A[1] and T. प्रवासे च
२. A[1] and T. पात्राच्च
३. A[1] and T. कानां
४. L. माना कार्यः
५. A. मेधिं च
६. A omits this word.
७. A. देवे त्रयो यज्ञाः

अभिवादनादिनियमाः



एते पञ्च महायज्ञा वर्तन्ते यस्य नित्यशः ।
स मुक्तः सर्वपापेभ्यो नाकपृष्ठे महीयते ॥
वैश्वदेवमिमं ये च सायंप्रातः प्रयुञ्जते ।
तदर्थैरायुषा कीर्त्या प्रजाभिश्च समृध्नुयुः ॥ इति ॥३५॥

अथ एकादशः खण्डः

अहरहराचार्यायाभिवादयीत॥१॥ अभिगम्य गुरुभ्यश्च॥२॥ समेत्य श्रोत्रि-याय प्रोष्य प्रेत्येत्याश्रोत्रियाय ॥३॥ 'असावाहं भो' इत्यात्मनो नाम निर्दिश्य

देवयज्ञः, ऋषियज्ञः, पितृयज्ञः, ब्रह्मयज्ञश्चेति पञ्चैते महायज्ञा यस्य नित्यशो वर्तन्ते स मुक्तः सर्वपापेभ्यो नाकपृष्ठे महीयते । पञ्चमहायज्ञस्तुतिरियम् ॥

इदानीं वैश्वदेवस्तुतिः । इमं वैश्वदेवं ये च सायंप्रातः प्रयुञ्जते; तदिति तस्माद्धेतोरित्यर्थः ; अर्थादिभिः समृध्नुयुरिति ॥ ३५ ॥

अथ एकादशः खण्डः

अह......यीत ॥ अहरहराचार्यायाभिवादयीत ॥ १ ॥

अभि......भ्यश्च ॥ गुरुभ्यश्च नित्यमभिगम्याभिवादयीत । गुरव इति ऋत्विक्श्वशुरपितृव्यमातुला उच्यन्ते, मातापितरौ चापि । अपरवयोभ्यां चाभिवादयीत, गुरुभ्य इति विशेषवचनात् ॥ २ ॥

समे......याय ॥ समेत्येत्यधिकारः । अश्रोत्रियायाविवृद्धतराय प्रोष्य प्रत्येत्य तदहरभिवादयीत ॥ ३ ॥

अभिवादनलक्षणमुच्यते—

असा......पादौ ॥ 'असावहं भो' इति प्रथमया आत्मनो नाम आदिश्य पाणी व्यत्यस्य दक्षिणेन पाणिना दक्षिणं पादं सव्येन पाणिना सव्यं पादम्—एवं तस्य पादौ दक्षिणोत्तराभ्यामुपसङ्गृह्य अभिवादयीत ॥ ४ ॥

१. A[1] and T. विमुक्तः
२. A[1] and T. समृद्धिभिः
३. A[2] omits अभिगम्य
४. A[2]. श्रोत्रियाय
५. T omits नाम निर्दिश्य
६. A omits this word.
७. A. अर्थादयः
८. A. शूरः
९. A. जपाभि

व्यत्यस्य पाणी दक्षिणेन दक्षिणं सव्येन सव्यं दक्षिणोत्तराभ्यां पाणिभ्यामुपसंगृह्य पादौ ॥४॥ असा उ इत्यस्य पाणी संगृह्य आशिषमाशास्ते ॥५॥ नावृतो यज्ञे न धर्मार्थं जुगुप्सेत ॥६॥ न जनसमवायं गच्छेत् ॥७॥ नोपर्युद्दिशेत् समेत्यात ॥८॥ अनाक्रोशकोऽपिशुनः ॥९॥ अकुंलं कुलः ॥१०॥ नैतिहः ॥११॥ नैकश्चरेत् ॥१२॥ न नग्नः ॥१३॥ नावहितपाणिः ॥१४॥ देवकुलायतनानि

असा......शास्ते ॥ असा उ इतीतरस्तु अस्य पाणी पाणिभ्यां संगृह्याशिषमाशास्त स्वस्त्यादिना ॥ ५ ॥

नावृ......प्सेत ॥ अवृतोऽपि यज्ञं द्रष्टुकामो यदि गच्छेत् तत्र धर्मं न जुगुप्सीत ॥ ६ ॥

न ज......गच्छेत् ॥ जनसमूहमित्यर्थः ॥ ७ ॥

नोप .....त्यात ॥ जने समेत्यापि उपरि नोद्दिशेत् । केनचिद्वक्ष्यमाणस्य शेषमाच्छिद्य स्वयं न ब्रूयात् ॥ ८ ॥

अना......शुनः ॥ अनाक्रोशकः स्यात्, अपिशुनः स्यात् ॥ ९ ॥

अकु......कुलम् ॥ अनेकगृहप्रवेशिनः[शी न] स्यादकारणात् ॥ १० ॥

नैतिहः ॥ इति ह राजा करोति, इति ह भोजवर्गः, इति ह नित्याप्रियः। किंवदन्तीप्रियो न स्यात् ॥ ११ ॥

नैकश्चरेत् ॥ १२ ॥

न नग्नः ॥ नग्नो न स्यात् ॥ १३ ॥

नाव......पाणिः ॥ पृष्ठतःकृतोभयपाणिर्न स्यात् ॥ १४ ॥

देव......क्षिणम् ॥ देवकुलायतनानि प्रदक्षिणं कुर्यात् ॥ १५ ॥

१. T. पादावसाने व्यत्यस्य
२. T. न व्रतो
३. T. Space is left out for writing धर्मा...समवा
४. A[1] and A[2]. कुलं
५. T. Space is left out for writing नाव...तनानि
६. A adds प्रस्थितः
७. L. नित्यप्रतिप्रीयः

प्रदक्षिणम् ॥१५॥ न हसेत् ॥१६॥ न धावेत् ॥१७॥ न निष्ठीवेत् ॥१८॥ न कण्डूयेत् ॥१९॥ मूत्रपुरीषे नावेक्षेत ॥२०॥ अवकुण्ठ्यासीत ॥२१॥ यद्येकवासा यज्ञोपवीतं दक्षिणे कर्णे कृत्वा ॥२२॥ नादित्याभिमुखः ॥२३॥ न जघनेन ॥२४॥नानन्तर्हितायां भूमौ ॥२५॥ न वृक्षमारोहेत् ॥२६॥ न कूपमवेक्षेत॥२७॥ नैको वनं गच्छेत्॥२८॥नाति[नापि] धुवनं गच्छेत्॥२९॥न त्वेव श्मशानम् ॥३०॥ सवस्त्रोऽहरहराप्लुवीत ॥३१॥ अप्लुत्योदकोऽन्यद्वस्त्रमाच्छादयीत ॥३२॥

न हसेत् ॥ १६ ॥

न धावेत् ॥ १७ ॥

न निष्ठीवेत् ॥ १८ ॥

न कण्डूयेत् ॥ १९ ॥

मूत्रपुरीषे नावेक्षेत ॥ २० ॥

अवकुण्ठ्यासीत ॥ तयोः करणकाले उत्तरे[त्तरीये]णावकुण्ठ्यासीत ॥ २१ ॥

यद्ये......कृत्वा ॥ एकवासास्तस्मिन्काले यदि स्यात्, यज्ञोपवीतं कर्णे कृत्वा आसीत ॥ २२ ॥

नादि......मुखः ॥ आदित्यमभिमुखो नासीत ॥ २३ ॥

न जघनेन ॥ आदित्यं पृष्ठतः कृत्वा नासीत ॥ २४ ॥

नान......भूमौ ॥ अनन्तर्हितायां भूमौ मूत्रपुरीषे न कुर्यात् । किञ्चिदन्तर्धायैव कुर्यात् ॥ २५ ॥

न वृक्षमारोहेत् ॥ २६ ॥

न कूपमवेक्षेत ॥ २७ ॥

नैको वनं गच्छेत् ॥ २८ ॥

नापि धुवनं गच्छेत् ॥ धुवनं कलहमित्यर्थः । धुवनं न गच्छेदपि ॥२९॥

न त्वे......शानम् ॥ श्मशानं न त्वेव गच्छेत् ॥ ३० ॥

सव......वीत ॥ ३१ ॥

अप्लु......यित ॥ अप्लुत्योदकः अविहतोदक इत्यर्थः । आर्द्रशरीर एवान्यद्वस्त्रमाच्छादयेत् ॥ ३२ ॥

१. T. Space is left out for writing कर्णे कृत्वा ना

२. A[1] and T omits नैको वनं गच्छेत्

३. A[1] and T. नातिधुवनं

४. A[2]. प्लुत्योदकमन्यद्वस्त्रं

५. A omits न निष्ठीवेत्

६. L. अच्युतः अविगतो-

न नग्नां स्त्रियं [1]निरीक्षेत ॥३३॥ नादित्यं सन्धिवेलयोः ॥३४॥ अनाप्तम् ॥३५॥ अकार्यकारिणम् ॥३६॥ प्रेतस्पर्शिनम् ॥३७॥ सूतिकोदक्याभ्यां न संवदेत॥३८॥ नोद्धृततेजांसि भुञ्जीत॥३९॥ न यातयामैः कार्यं कुर्यात् ॥४०॥ न सह भुञ्जीत॥ ४१॥ न शिष्टम् ॥४२॥ पितृदेवतातिथिभृत्यानां शिष्टं भुञ्जीत ॥४३॥ सिलमुञ्छमयाचितप्रतिग्रहः साधुभ्यो [2]याचतो वा याजनमध्यापनं वृत्तिः॥४४॥

न न......क्षेत ॥ ३३ ॥

नादि......लयोः ॥ सन्धिवेलयोरित्युद्यन्तं चास्तेयन्तं चादित्यं नावेक्षेत ॥

अनाप्तम् ॥ अनाप्तमिति चण्डालम् ॥ ३५ ॥

अकार्यकारिणम् ॥ पतितम् ॥ ३६ ॥

प्रेत......शिनम् ॥ प्रेतस्पर्शिनं नेक्षेत । प्रेतस्पर्शीति केचित् पठन्ति । यथार्थमध्याहारः कर्तव्यः । न तिष्ठेदित्येवमादि ॥ ३७ ॥

सूति......देत ॥ ३८ ॥

नोद्धृ......ञ्जीत ॥ उद्धृततेजांसीति पिण्याकादीनि न भुञ्जीत । तेज इति प्रधानमभिप्रेतम् ॥ ३९ ॥

न या......कुर्यात् ॥ यातयामैरित्यन्यस्मिन् कर्मण्युपयुक्तैः पुनरन्यत्कार्यं न कुर्यात् । तथा हि यातयामत्वं श्रुतावुक्तम् ॥ ४० ॥

न स......ञ्जीत ॥ केनचिदप्येकस्मिन्पात्रे न सह भुञ्जीत । अथवा सर्वान् भोजयित्वा अन्ते स्वयमेवासीनो भुञ्जीत । न तैः सहासीनः । तदुक्तम्—"श्रेयांसं श्रेयांसमानुपूर्व्येण" इत्यारभ्य "शेषं दम्पती भुञ्जीयाताम्" इति । कालैकत्वेऽपि समत्वं भवति । यथा सह न भवन्त इति प्रतिषेधानित्यत्वं वा पुरस्तात्प्रतिषेधात् ॥

न शिष्टम् ॥ अन्योपयुक्तं शिष्टं न भुञ्जीतेति ॥ ४२ ॥

पितृ......ञ्जीत ॥ एतेषां शिष्टं भुञ्जीत । तथा चैवोक्तम् । इह प्रतिषेधात्तत्रापि विकल्पः स्यादिति मत्वा पुनरप्युक्तम् ॥ ४३ ॥

सिल......वृत्तिः ॥ सिल इति द्वाभ्यामङ्गुलिभ्यामाहृत्य परिगृहीतस्य सञ्चयकरणम् । तथैव समूह्यकरणमुञ्छम् । अयाचितो नामप्रतिग्रहः देहीत्यनुक्त्वा आहृतहरणम् । याचितो देहीत्युक्त्वा वा साधुभ्यो वा हरणम् । साधव इति द्विजातयः ।

१. A[1] and T. स्त्रियमीक्षेत अन्यत्र मैथुनात् नादित्यं

२. A[2]. याचितो

**पूर्वं पूर्वं लघीयः ॥४५॥ असंसिद्धमानायां वैश्यवृत्तिर्वा ॥४६॥ अप्रमत्तः पितृदैवतकार्येषु ॥४७॥ ऋतौ स्वदारगामी ॥४८॥ न दिवा स्वपीत ॥४९॥**

अथवा स्वधर्मे वर्तमानाः साधवः । याजनं दक्षिणादानम् । अध्यापनं शिष्येभ्यो हरणं वृत्तिरिति जीविकोपायजातिवाचकत्वादेकवचनम् ॥ ४४ ॥

पूर्वं......घीयः ॥ तेषां वृत्तिकारणानां पूर्वं पूर्वं लघीयः कारणम्; पापावेक्षया लघीय इत्युक्तम्; धर्मापेक्षया चेद् गरीय इति भवति । एतद्विधानं ब्राह्मणस्योत्तरत्र वक्ष्यामः ॥ ४५ ॥

असं......त्तिर्वा ॥ एतासु कस्याश्चिदसंसिद्धमानायां वैश्यवृत्तिर्वा स्यात् । सर्वेषां वर्णानां वृत्तिविशेषाः शास्त्रान्तरेषूक्ताः । तस्माद्वैश्यवृत्तिरिति प्रसिद्धग्रहणम् । कृषिवणिक्पाशुपाल्यं पण्यापण्यविशेषश्च ॥ ४६ ॥

अप्र......र्येषु ॥ पितृदैवतकार्येषु अप्रमत्तः स्यात् ॥ ४७ ॥

ऋतौ......गामी ॥ ऋतुकाले स्वदारगामी स्यात् । प्रतिषेधप्रधानमिदं वाक्यम्, आहोस्विन्नियमप्रधानम्? ऋतावेव गच्छेदित्युक्ते नान्यत्रेति प्रतिषेधविधानं स्यात् । ऋतौ गच्छेदेवेत्युक्तौ गच्छेदिति प्रतिनियमप्रधानं स्यात्; अन्यत्र च गमनं प्रतिषिद्धं स्यात् । नियमप्रधानमिति ब्रूमः । ऋतौ गच्छेदेव, न न गच्छेदिति ऋतावगमनाद्दोषः; अन्यत्र गमने चाद्दोषः । कुत एतद्गम्यते? नियम इति ज्ञापनात् । यदयमन्तरालव्रतेषु मांसानशनं ब्रह्मचर्यमिति चतुर्ष्वपि मासेषु स्त्रीगमनं प्रतिषिध्य पुनः ऋतौ वा जायामुपेयात् इत्यृतौ गमनं विकल्पेन विदधाति—तद्ज्ञापयति—सर्वदा गमनमस्तीति । यद्यृतावेव गमनमभविष्यत्, तत्र ब्रह्मचर्यं न व्यधास्यत् । ऋतौ वा जायामुपेयात् इत्येव व्यधास्यत् । तस्मादृतौ गमनं नियतम्, अन्यत्रानियतम् ॥ ४८ ॥

न दि......पीत ॥ ४९ ॥

१. A[1] and T omit पूर्वं
२. A[1] and T. स्वपिति
३. A. वाक्यः
४. A. प्रधानार्थम्
५. A. गच्छेदेवेत्युक्ते न न गच्छेदिति प्रतिनियमप्रधानं स्यात्
६. A omits ऋतौ...प्रधानं स्यात्
७. A. पुनतृकौ



K—18

न पूर्वापररात्रेषु ॥५०॥ अहरहः स्वाध्यायशीलः ॥५१॥ सत्यवादी ॥५२॥ नित्योदकी ॥५३॥ नित्ययज्ञोपवीती ॥५४॥ न विरहेदाचार्यमन्यत्र नियोगात् ॥५५॥ अनुज्ञातो वा ॥५६॥

## अथ द्वादशः खण्डः

षड्विंशतिभिः कारणैः खलु भो ब्राह्मणेनाध्येतव्यं भवत्यपरिमितैर्वा ॥१॥

न पू......त्रेषु ॥ पूर्वरात्रेष्वपररात्रे च न स्वपेत् ॥ ५० ॥

अह......शीलः ॥ नित्यस्वाध्यायः पूर्वोक्तः। इदमन्यत्, अहरहः स्वाध्यायशीलः स्यात्। अधीताध्ययनोऽपि धारणार्थं विशेषज्ञापनार्थं च ॥ ५१ ॥

सत्यवादी ॥ सत्यवादनशीलः स्यात् ॥ ५२ ॥

नित्योदकी ॥ नित्योदकः स्यात्। नित्यकार्यार्थमिदं विधानम्। तस्माद्दुर्लभोदके देशे उदकमुद्धारयेत्। सुलभोदके भूमिगतेनैव कार्यप्रसिद्धेर्न धारयेत् ॥ ५३ ॥

नित्य......वीती ॥ नित्ययज्ञोपवीती स्यात्। ननु च यज्ञोपवीतमपि कार्यकालं नित्यं धारयेत्, न खलु सर्वकालं धारयेत्। "यद्येकवासा यज्ञोपवीतं कर्णे कृत्वा" इति दर्शनात् ॥ ५४ ॥

न वि......योगात् ॥ नियोगादन्यत्राचार्यं न विरहेत्। आचार्येण कस्मिंश्चित्कर्मणि नियुक्तो विरहेत् ॥ ५५ ॥

अनुज्ञातो वा ॥ स्वकार्येणापि तेनानुज्ञातो विरहेत् ॥ ५६ ॥

## अथ द्वादशः खण्डः

षड्वि......तैर्वा ॥ 'खलु भो' इति हेत्वर्थे। यस्मात् षड्विंशतिभिः कारणैः ब्राह्मणेनाध्येतव्यं भवति, अपरिमितैर्वा कारणैः, तस्मान्न विरहेदाचार्यमिति। इह हेतुवचने ब्राह्मणदर्शनात् पूर्वोक्तमपि ब्राह्मणस्यैवेत्युक्तम् ॥ १ ॥

१. T. गो
२. A[1]. त्येतव्यं T. त्स्वेतव्यं
३. A. नित्यस्वाध्यायः
४. L. न खलु न खलु सर्वं धारयेत्

तद्यथा कुले जातः ॥२॥ शक्तिमान् ॥३॥ पूर्वे चाभिरूपा आसन् ॥४॥ साध्वाचरितं चैतत्॥५॥ऋणं चैतद्ब्राह्मणस्य॥६॥ कर्मणामध्ययनं शुभतरम्॥७॥ अधीत्य च कार्याकार्ये ज्ञास्यामि ॥८॥ विद्वांसश्च सर्वत्र पूज्यन्ते ॥९॥

तद्य......जातः ॥ कानिचित् कुले जात उत्तरत्रेति करणा[?]वक्ष्यते; तत्सर्वमध्याह्रियते । अस्मिन् कुले जात इत्यधिकारादेवाध्येतव्यः; इतरथा ह्यधिकारोऽनर्थकः स्यात् ॥ २ ॥

शक्तिमान् ॥ नास्मिन्कुले जातानामपि सर्वेषां शक्तिरस्ति, मूकादिदर्शनात्; तस्माच्छक्तिमानिति विशेषाधिकारः । शक्तिमानिति चाध्येतव्यम् ॥ ३ ॥

पूर्वे......आसन् ॥ पूर्वेऽभिरूपा अधीताध्ययना आसन् । न मयीदं विच्छिन्नं भवितुमर्हति इति वा अध्येतव्यम् ॥ ४ ॥

साध्वा......श्चैतत् ॥ साध्वाचरितमिति चाध्येतव्यम् ॥ ५ ॥

ऋणं......णस्य ॥ "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इति ऋणसंस्तुतमेतत् । तस्मादध्येतव्यम् । ब्राह्मणाधिकारे पुनर्ब्राह्मणवचनमन्यैरप्यधिकृतैरध्येतव्यमेव । ब्राह्मणेन तु विशेषेण इति ज्ञापनार्थम् ॥ ६ ॥

कर्म......तरम् ॥ ७ ॥

अधी......स्यामि ॥ अधीत्य च कार्याकार्ये ज्ञास्यामि इति चाध्येतव्यम् । आहृते वेदज्ञानात् कार्याकार्ये ज्ञातुं शक्यम् ॥ ८ ॥

विद्वां......ज्यन्ते ॥ सर्वज्ञादिषु विद्वांस एव पूज्यन्ते, न सर्वे । तस्माद्विद्वद्विशेषदर्शनादध्येतव्यमेव ॥ ९ ॥

१. A[1] and T. चाधिरूपाः
२. A[2] omits this sūtra.
३. A[1] and T. ज्ञात्वा नि विद्वान्
४. A[1]. विद्वान् सन्दिश्च
T. विद्वान् सम्धिश्च
५. A. चेत्
६. L omits this sūtra and the commentary.
७. L. ऋणवान्

शिष्याश्च शुश्रूषन्ते॥१०॥महयन्ति च सर्वत्र॥११॥सर्वत्र गतिमान् भविष्यामि॥१२॥ यक्ष्यामि ॥१३॥ याजयिष्यामि ॥१४॥ लक्षणीयो भविष्यामि ॥१५॥ हवींषि च सुसंस्कृतानि भोक्ष्यामि ॥१६॥ मया च स्वाध्यायवता मातापितरौ स्वर्गे लोके सुखमेधिष्येते ॥१७॥ ब्रह्मचर्येण चायुष्मान् वर्चस्वी भविष्यामि ॥

शिष्या......षन्ते ॥ शुश्रूषन्तेति ह [?] प्रेषकर्म । शिष्याश्च विहिता ब्राह्मणादयो यस्मात् कर्मकरा भवन्ति, तस्मादध्येतव्यम् ॥ १० ॥

मह......र्वत्र ॥ सर्वत्र सदा महयन्त्येव विद्वांसं शिष्याः । अस्मदाचार्यः खलु पाणिनिसमो व्याकरणे, जैमिनिसमो मीमांसायाम्—इत्येवम् । तस्मादध्येतव्यम्, अहमप्याचार्यो भविष्यामि—इति ॥ ११ ॥

सर्व......ष्यामि ॥ विदुषो हि सर्वत्राकुण्ठतरा गतिः । तस्मात् सर्वत्र गतिमान् भविष्यामि इति चाध्येतव्यम् ॥ १२ ॥

यक्ष्यामि ॥ यक्ष्यामि इति चाध्येतव्यम् । विदुषो ह्यधिकारः ॥ १३ ॥

याजयिष्यामि ॥ याजयिष्यामि इति चाध्येतव्यम् । उक्तो हेतुः ॥ १४ ॥

लक्ष......ष्यामि ॥ एकस्मिन् ग्रामे अनेकेषु सत्सु विद्वानेव हि लक्ष्यतेऽन्यग्रामवासिभिः । तस्माल्लक्षणीयो भविष्यामि इति चाध्येतव्यम् ॥ १५ ॥

हवीं......क्ष्यामि ॥ हवींषि सुसंस्कृतानि भोक्ष्यामि इति चाध्येतव्यम् । विदुष एव हि हुतशेषभुक्तवचनम् ॥ १६ ॥

मया......ष्येते ॥ अत्र वृत्तिविशेषेण पितरौ स्वर्लोकमाप्नुत इति स्मर्यते । तस्मादध्येतव्यम् ॥ १७ ॥

ब्रह्म......ष्यामि ॥ ब्रह्मचर्येण चायुष्मान् वर्चस्वी भविष्यामि इति चाध्येतव्यम् । एवमपि स्मर्यते ॥ १८ ॥

१. T. वहयन्ति
२. T and A[1] omit सर्वत्र
३. T. धिष्यन्ते
४. A[1] and T. वायुष्मान्
५. L. शुश्रूषन्तेति
६. L. प्रेतिकर्म

१८॥ स्वाध्यायेन क्षिप्रं पाप्मानमपहन्यामिति च ॥१९॥ स्वाध्यायवतः सर्वे लोकाः ॥२०॥ नाप्राप्यं तस्य किञ्चित् ॥२१॥ न तस्य पुनरावृत्तिः ॥२२॥ मन्त्रब्राह्मणयोः वेदशब्दः ॥२३॥ वेदो हि धर्ममूलम् ॥२४॥ अचोरहरणीयं च ब्रह्म॥२५॥ एकैका चर्क् सम्यगधीता कामधुग्भवति ॥२६॥ यं यं क्रतुमधीते

स्वाध्या......मिति ॥ स्वाध्यायेन क्षिप्रं पाप्मानमपहन्याम् इति चाध्येतव्यम् । श्रुतिप्रामाण्यादिदमुच्यते ॥ १९ ॥

स्वाध्या......लोकाः ॥ स्वाध्यायवतः सर्वे स्वर्गादयो लोका इति चाध्येतव्यम् । अश्रोताध्ययनो हि कर्म करोति ॥ २० ॥

नाप्रा......किञ्चित् ॥ तस्य विदुषो नाप्राप्यं किञ्चिदप्यस्ति ॥ २१ ॥

न त......वृत्तिः ॥ तस्य विदुषः पुनरावृत्तिर्न भवति । निःश्रेयसं भवति इत्येतस्मादध्येतव्यम् ॥ २२ ॥

मन्त्र......शब्दः ॥ वेदो वेत्तेः ज्ञानार्थस्य । सर्वेषु ज्ञातव्येषु मन्त्रब्राह्मणयोरेव, तस्माद्वेदशब्दः प्रसिद्धः, अवश्यज्ञातव्यत्वात् । तस्मादध्येतव्यम् ॥ २३ ॥

वेदो......मूलम् ॥ लोके हि सर्वधर्मशास्त्राणां मूलं तु वेदः । तस्मादध्येतव्यम् ॥ २४ ॥

अचो......यं च[च ब्रह्म] ॥ अचोरहरणीयं ब्रह्म चाध्येतव्यम् । अविनाशिनि हि यत्नं कुर्यात् ॥ २५ ॥

एकै......वति ॥ एकैका च ऋक् सम्यङ्नियमपूर्वमधीता कामधुग्भवति । तस्मादध्येतव्यम् ॥ २६ ॥

यं यं......तीति ॥ यं यं क्रतुमधीष्यामि तेन तेनेष्टं भविष्यति इति चाध्येतव्यम् । तथा हि श्रुतिः ॥ २७ ॥

१. A[1] and T. उपहन्यां
२. A[1] and T. वता मातापितरौ स्वर्गे लोके न प्राप्यन्नतस्य
३. A. अधिकाध्ययनः
४. L adds ब्रह्म here.

तेन तेन चेष्टं भविष्यतीति ॥२७॥ तदपि श्लोकाः ॥२८॥—

केतुमान् लघिमान् दक्षो मित्रवान् धृतिमान् शुचिः ।
शीलवान् श्रुतवान् दान्तो भवेद्वै पङ्क्तिपावनः ॥२९॥

चोरराजाग्न्युदकेभ्यः सदा सञ्चयिनां भयम् ।
निर्भयास्तु सुखं वैद्याश्चरन्त्यक्षय्यवृत्तयः ॥३०॥

तदेतत्पुष्कलं वाक्यं वेदज्ञानप्रयोजनम् ।
कुर्यादध्ययने यत्नं सत्यवादी जितेन्द्रियः ॥ इति ॥३१॥

तदप्येतदृषिराह ॥३२॥

"यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः॥" इति॥३३॥

तदपि श्लोकाः ॥ तत्र श्लोका अपि भवन्ति ॥ २८ ॥

केतु......वनः ॥ केतुरिति यशः । लघिमान् इति चेत् अन्नवान् इत्यर्थः । पङ्क्तिं पावयतीति पङ्क्तिपावनः ॥ २९ ॥

चो......वृत्तयः ॥ चोरादिभ्यः सञ्चयिनां भयम् ; तद्वैद्यानां नास्ति । तस्मादक्षय्यवृत्तयो निर्भयाश्च वैद्याः सुखं चरन्ति । भोजनेन च न क्षीयन्ते । तस्मादक्षय्यवृत्तयः । वृत्तिरपि विद्यैव, नान्या वृत्तिः कार्या इत्यर्थः ॥ ३० ॥

तदे......न्द्रिय इति ॥ तदेतदनेकैः कारणैर्वेदज्ञानप्रयोजनमुक्तम् । तस्मादध्ययने यत्नं कुर्यादेव । सत्यवादी जितेन्द्रिय इति ॥ ३१ ॥

तदे......राह ॥ ३२ ॥

यो जागार......न्योका इति ॥ ३३ ॥

१. All except T add विज्ञायते
२. A². तदभि
३. T. द्रव्यवान्
४. A². धृतिमान्
५. T. पुष्करं
६. T. रयेन्योका इति
A². इति सव्ये न्योकाः
७. L. तदभि
८. L omits तत्र श्लोका अपि

कृषिकर्म



## अथ त्रयोदशः खण्डः

रोहिण्यां कृषिकर्माणि कारयेत् ॥१॥ प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेत् ॥२॥ गोमयेन परिमण्डलं स्थण्डिलमुपलिप्य प्रागग्रेषु नवेषु कुशेषु "द्यावापृथिवीभ्यां नमः" इत्यपो दद्यात् ॥३॥ एवमेव गन्धमाल्यधूपदीपानाम् ॥४॥ पयसौदनं वा ॥५॥ "नमो द्यावापृथिवीभ्यां नमः" इति चोपस्थानम् ॥६॥ न नित्यं परिस्तरणम् ॥७॥ यथासमाम्नातो वा विकल्पः ॥८॥

## अथ त्रयोदशः खण्डः

रोहि......रयेत् ॥ १ ॥ कथमिति चेत्—

प्राच्यां..... हरेत् ॥ आत्मनः क्षेत्रस्य प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिमुपहरेत् ॥ २ ॥ कथमिति चेत्—

गोम......दद्यात् ॥ तत्र गोमयेन परिमण्डलं स्थण्डिलमुपलिप्य तत्र प्रागग्रान् कुशानुपस्तीर्य । उदगग्रनिवृत्त्यर्थं प्रागग्रविधानम् । तेषु कुशेषु "द्यावापृथिवीभ्यां नमः" इत्यपो दद्यात् ॥ ३ ॥

एव......पानाम् ॥ एवमेव गन्धादीनामपि दानं कार्यम् । एवमेवेति—अनेनैव मन्त्रेणेत्यर्थः ॥ ४ ॥

पय......नं वा ॥ पयसौदनं वा स्थालीपाकस्य स्थाने कुर्यात् ॥ ५ ॥

नमो......चोपस्थानम् ॥ ६ ॥

न नि......रणम् ॥ इह स्थालीपाकश्रवणलिङ्गाद्धोमोऽनुमीयते । यथाप्रकृति तस्येदमपि लिङ्गं न नित्यं परिस्तरणम्, प्रकृतिवत्प्राप्तस्य परिस्तरणस्य विधिरयम् । "द्यावापृथिवीभ्यां स्वाहा" इति हुत्वा परिसमाप्य पुनर्बलिं हरेत् ॥ ७ ॥

१. A[1] and A[2] omit प्रागग्रेषु नवेषु कुशेषु and add later. See fn. ३
२. All except L omit न T adds नित्यं
३. A[1] and A[2] add प्रागग्रेषु नवेषु कुशेषु
४. T. एवं वा कल्पः
५. A. अवस्तीर्य
६. A omits this word.
७. L. इति

तच्छेषेण ब्राह्मणान् [णम्] तर्पयति॥९॥ प्रथमयोगे सीरस्य ब्राह्मणः सीरं स्पृशेत् "शुनं नः फालाः" इति[2] ॥१०॥ "क्षेत्रस्य पतिना" इति सूक्तमनुब्रूयात् ॥ ११॥ कृतां परिहाप्य ॥१२॥ उदकं तरिष्यन् स्वस्त्ययनं करोति ॥१३॥ उदकाञ्जलीन् त्रीनप्सु जुहोति ॥१४॥ समुद्राय वयुनाय नमो वरुणाय नमो वारुणाय धर्मपतये नमो नमस्सर्वासां नदीनां सर्वासां पित्रे विश्वकर्मणे मर्त्ये

यथा......कल्पः ॥ यथा समाम्नातमेव वा विकल्पः स्यात् । यावदुक्तमपि कर्म स्यात्, होमकर्मानुमातव्यमित्यर्थः ॥ ८ ॥

तच्छे......यति ॥ तच्छेषेण बलिशेषेण कश्चिद्ब्राह्मणं वेदविदं तर्पयति ॥ ९ ॥

प्रथ......फाला इति ॥ स ब्राह्मणः सीरस्य प्रथमयोगे "शुनं न फालाः" इत्यनयर्चा सीरं स्पृशेत् ॥ १० ॥

क्षेत्र... हाप्य ॥ अथ "क्षेत्रस्य पतिना" इति सूक्तमनुब्रूयात् ॥ ११ ॥

कृतां......प्य ॥ "शुनं न फालाः" इत्येतां परिहाप्य ॥ १२ ॥

उद......रोति ॥ उदकं तरिष्यन्, भयं शङ्केत चेत्, स्वस्त्ययनं करोति। स्वस्त्ययनविधानाद् भयस्थान एव ॥ १३ ॥ सर्वोदककरणे कथमिति चेत्—

उद......होति ॥ त्रीनुदकाञ्जलीनप्सु जुहोति । अञ्जलिनोदकमादाय उदक एवासिञ्चतीत्यर्थः ॥ १४ ॥

समुद्राय......जपित्वा ॥ "समुद्राय" इत्येतांस्त्रीन् मन्त्रान् जपित्वा । पूर्वौ मन्त्रौ नमस्कारान्तौ । उत्तरो नमस्कारादिः प्रतिमन्त्रं जुहोति ॥ १५ ॥

१. T. Space is left out for writing ब्राह्मणः...नः

२. A[2] and T add एतया

३. T. Space is left out for writing जुहोति समुद्राय

४. T. सर्वासामपि इन्द्रपिण्डकर्मणे

प्रतिमास पितृभ्यः श्राद्धं



हविर्जुषतां इति जपित्वा ॥१५॥ प्रतीपं स्रवन्तीभ्य उदीचं स्थावराभ्यः ॥१६॥ तरंश्चेद् भयं शङ्केत वासिष्ठं जपेत् "समुद्रज्येष्ठाः" इत्येतत् सूक्तं प्लवम् ॥१७॥

## अथ चतुर्दशः खण्डः

अथ मासि मासि पितृभ्यो दद्यात् ॥१॥ ब्राह्मणान् वेदविदुषोऽयुग्मान् त्र्यवरार्ध्यान् पितृवदुपवेश्यायुग्मान्युदपात्राणि तिलैरवकीर्य ब्राह्मणानां

प्रती......राभ्यः ॥ स्रवन्तीभ्यः प्रतीपं जुहोति। स्थावराभ्योऽद्भ्य उँदीचं जुहोति ॥ १६ ॥

तरन्......प्लवम् ॥ तरन् मध्ये चेद् भयं शङ्केत, प्लवं वासिष्ठम् "समुद्रज्येष्ठाः" इत्येतं सूक्तं जपेत्। वासिष्ठमिति ज्ञापनार्थमुक्तम्, वासिष्ठमेतत् सूक्तमिति। तस्मिन्काले ज्ञात्वा ध्यायन् जपेदित्येवमर्थम् ॥ १७ ॥

## अथ चतुर्दशः खण्डः

अथ......दद्यात् ॥ अथ मासि मासि सकृदपरपक्षेऽपराह्णे पितृभ्यो दद्यात्। "अथ यदपराह्णे पितृयज्ञेन चरन्ति, अपक्षयभाजो वै पितरस्तस्मादपराह्णे पितृयज्ञेन चरन्ति तदाहुर्यदपरपक्षभाजः पितरोऽथ कस्मादेनान् पूर्वपक्षे यजन्ति" इति श्रुतिलिङ्गादपरपक्षेऽपराह्ण इति चोक्तम् ॥ १ ॥

ब्राह्म......नयेत् ॥ ब्राह्मणानयुग्मान् वेदविदस्त्र्यवरार्ध्यांस्त्रीन् पञ्च सप्त इत्येव ब्राह्मणान्। पितृवदित्येवं त्र्यवरार्ध्यत्वे सिद्धे पुनस्त्र्यवरार्ध्यान् इति ब्रुवन्नेकमप्याशङ्कते। तस्मादलाभे एकं वा पितृवदुपवेश्य 'अयं पिता, अयं पितामहः, अयं प्रपितामहः' इत्यभिसन्धाय उपवेश्योदङ्मुखान् "दक्षिणाम्यायानि पित्र्याणि" इति वचनादात्मनो दक्षिणाभिमुखत्वार्थम्। यदि पञ्च, द्वौ पितृस्थाने, द्वौ पितामहस्य स्थाने, एकं

१. T. Between this and the next word there is space for writing three or four syllables.

२. All except L omit प्लवम्

३. T. ब्राह्मणाय पाणिभिः

४. A. उदिवं

५. L omits वासिष्ठं...जपेत्

पाणिषु निनयेत् ॥२॥ अत ऊर्ध्वमलङ्कृतानामन्त्र्याग्नौ कृत्वान्नं च 'असावेतत्ते' इत्यनुदिश्य भोजयेत् ॥३॥ भुञ्जानेषु महाव्याहृतयः सावित्रीं मधुवातीयाः पितृदेवत्याः पावमानीर्जपेद् यथोत्साहमन्यत् ॥४॥ भुक्तवत्सु पिण्डान् दद्यात् ॥५॥ पुरस्तादेके ॥६॥ पिण्डान् तत्पश्चिमेन पत्नीनां किञ्चि-

प्रपितामहस्य स्थाने करोति । यदि सप्त, त्रीन् पितुःस्थाने, द्वौ द्वौ पितरयोरिति । एषमेकं चेत्, तमेव सर्वेषां स्थाने उपवेशयेत् । अयुग्मानीति प्रतिपुरुषमेकैकभोजनपक्षे त्रीण्येवोदपात्राणि प्रत्येकं पवित्राणि च । तेष्ववधाय एकपवित्रमिति वचनात् तिलैरवकीर्य तेषां ब्राह्मणानां पाणिभिस्ता अपो निनयेत् ॥ २ ॥

अत......जयेत् ॥ अत ऊर्ध्वं ब्राह्मणानलङ्कृत्य अलङ्कृतानामन्त्र्याग्नौ कृत्वा 'अग्नौ करोमि' इत्युक्त्वेत्यर्थः । अन्नं च । चशब्दः अन्नमग्नौ च कृत्वा भोजयेदित्यर्थः । हुतशेषमन्नम् 'असावेतत्तेऽन्नम्' इति पितृनामधेयं निर्दिश्य यथासनं भोजयेत् । यथा व्रियन्ते तथा भोजयेत् ॥ ३ ॥

भुञ्जा......मन्यत् ॥ तेषु भुञ्जानेषु महाव्याहृतीः सावित्रीं मधुवातीयाः पितृदेवत्याः पावमानीश्च जपेत् । बहुवचनं त्रित्वावधारणार्थमुक्तम् । यथोत्साहमन्यदपि स्वस्त्ययनादि जपेत् ॥ ४ ॥

भुक्त......दद्यात् ॥ तेषु भुक्तवत्सु पिण्डं[ण्डान्] दद्यात् ॥ ५ ॥

पुरस्तादेके ॥ भोजनात्पुरस्तादेके पिण्डान् दद्युः ॥ ६ ॥

पिण्डा......धाय ॥ ततः पश्चिमेन किञ्चिदन्तर्धाय पितृपत्नीनामपि पिण्डं [ण्डान्] दद्यात् । ननु स्फयेनोन्मार्जनादि भवति । मन्त्राश्च स्त्रीवदूह्याः । नैतदस्ति, यथाप्रकृत्यग्नौकरणादि भवति, पत्नीभ्यो दानं च अधिकृतम् । तद्यावदुक्तं भवति । यदि पत्नीभ्य एव पिण्डदानमुक्त्वा पिण्डपितृयज्ञविशेषो वक्ष्यते, ततो होमोऽभविष्यत् ॥ ७ ॥

१. T and A[2]. कृतांस्तानामन्त्र्य

२. A. वा

३. A. पत्नीनामपिण्डं

४. A. तु

प्रतिमास पितृश्राद्ध : श्राद्धादि



दन्तधावि ॥७॥ ब्राह्मणानां शेषं निवेदयेत् ॥८॥ अग्नौकरणादि पिण्डपितृयज्ञेन कल्पो व्याख्यातः ॥९॥ सूत्राणि दत्त्वाञ्जनाभ्यञ्जनगन्धपुष्पधूपदीपांश्च प्रतिपिण्डं दद्यात् ॥१०॥ अथातं एकोद्दिष्टम् ॥११॥ एकं पवित्रम् ॥१२॥ एकमर्घ्यम् ॥१३॥ एकपिण्डम् ॥१४॥ नाग्नौकरणम् ॥१५॥ अभिरम्यतामिति विसर्गः ॥१६॥ संवत्सरमेवं प्रेतः ॥१७॥ चतुर्थविसर्गस्तु ॥१८॥

ब्राह्म.........दयेत् ॥ तेषां ब्राह्मणानां भुक्तवतामस्मिन्गृहे अन्नशेषं निवेदयेत्। यदि तेऽनुजानीरन् गृह्यताम् इति, ततस्त्वयं भविष्यति ॥ ८ ॥

अग्नौ......ख्यातः ॥ अग्नौकरणादि परिसमूह्य पर्युक्ष्य इत्येवमादि पिण्डपितृयज्ञेन कल्पो व्याख्यातः ॥ ९ ॥

सूत्रा......दद्यात् ॥ "एतद्वः पितरो वासो वध्वं पितरः" इति त्रीणि सूत्राण्युपन्यस्य इत्येवमन्तं कृत्वा अञ्जनादीनि च प्रतिपिण्डं दद्यात् ॥ १० ॥

अथा......द्दिष्टम् ॥ अथात एकोद्दिष्टश्राद्धं वक्ष्यामः। एकमुद्दिश्य यत्क्रियते तदेकोद्दिष्टम् ॥ ११ ॥

एकं पवित्रम् ॥ एकं पवित्रं स्यात्। एतदेव ज्ञापकं मास[मासि]श्राद्धे प्रत्युदपात्रं पवित्राणीति ॥ १२ ॥

एकमर्घ्यम् ॥ अर्घ्यमित्युदपात्रमुच्यते ॥ १३ ॥

एकपिण्डम् ॥ एकं पिण्डं स्यात् ॥ १४ ॥

नाग्नौकरणम् ॥ अग्नौकरणं न स्यात् ॥ १५ ॥

अभि......सर्गः ॥ अभिरम्यतामित्युक्त्वा विसर्गः कार्यः ॥ १६ ॥

संवत्सरमेवं प्रेतः ॥ एवमेकोद्दिष्टं संवत्सरं प्रेते कुर्यात्। तं च प्रेतमुद्दिशन् मासि मासि इति प्राप्त इदमुच्यते ॥ १७ ॥

चतुर्थविसर्गस्तु ॥ चतुर्थेन कर्मणा विसर्गः चतुर्थमेकोद्दिष्टं संवत्सरे पूर्णे करोति। व्रतापवर्गे एकं मध्येऽन्ये इतरे ॥ १८ ॥

१. T omits अतः
२. T. एकपिण्डमेकमर्घ्यं
३. T. त्रिविसर्गः
४. A[1] and T. विसर्गश्च

वृद्धिपूर्तेषु युग्मान् भोजयेत् ॥१९॥ प्रदक्षिणमुपचारः ॥२०॥ यवैस्तिलार्थः ॥

अथ पञ्चदशः खण्डः

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टमीष्वष्टकास्त्वपरपक्षेषु ॥१॥ तासां प्रथमायां शाकं जुहोति—

वृद्धि......जयेत् ॥ वृद्धिपूर्तेषु भूतिकर्मसु इत्यर्थः । युग्मान्ब्राह्मणान् भोजयेत् ॥ १९ ॥

प्रद......चारः ॥ उपचारः प्रयोग इत्यर्थः ॥ २० ॥

यवैस्तिलार्थः ॥ कार्यः । कुर्यादित्यर्थः । युग्मानित्ययुग्मनिवृत्त्यर्थम् । प्रदक्षिणमित्यपसव्यनिवृत्त्यर्थम् । तिलनिवृत्त्यर्थं यवविधानम् । अथ भोजयेदिति कस्मादुक्तम्? ननु भोजनं विहितमेव; भोजयेदिति परिसङ्ख्यार्थम्, भोजयेदेव, नान्यत्कुर्यादिति । इह केचित् स्वस्ति वाच्य "नान्दीमुखाः पितरः प्रीयन्ताम्" इति वाचयित्वा भोजयन्ति । अत्रासति ब्राह्मणानामाशीर्वादे नास्ति विरोधः[1] । केचित्तु समन्त्रकं बलिं पूर्वेद्युर्हरन्ति । तच्छास्त्रान्तरविहितम् । जैमिनीये हि तदुक्तम् । तथा सति शास्त्रान्तरप्रयोगः स्यात् । इह तु युग्मान्युदपात्राणि यवैरवकीर्य ब्राह्मणानां पाणिभिर्निनयेत् । अन्नानुदेशनं च न भवति, होमाभावात् । हुतशेषस्य तदनुदेशनम् । ततोऽलङ्कृतान् प्राङ्मुखान् ब्राह्मणान् युग्मान् भोजयेत् प्रदक्षिणोपचारेण इत्येतावद्विधानम् । अपि चेह यद्विहितं न[हितं तदेव भवति] सर्वत्र विहितं चेह न भवति, तथा सत्यन्यत्वाभावः; सर्वं ह्येकं शास्त्रमभविष्यत्; तस्मादेकं शास्त्रं परिगृह्य तत्रार्थान् सम्यक् परीक्ष्य प्रयुञ्जानस्य न प्रत्यवायः । अशक्यं च कृत्स्नाधिकविध्युपसंहारः कर्तुम् । तस्माद्यावदुक्तं कर्तव्यम् ॥ २१ ॥

अथ पञ्चदशः खण्डः

ऊर्ध्व......क्षेषु ॥ आग्रहायण्या ऊर्ध्वमपरपक्षेष्वष्टमीषु तिस्रोऽष्टकाः कार्याः । आग्रहायण्या इति का उच्यते? अपरपक्षेष्वष्टमीषु इत्येकवाक्यदर्शनात् सैवोच्यते । एवं तर्हि तैष्यादीनि ता एव वक्तव्याः, किमनयाप्रकृतया । तस्यामप्यष्टका केषाञ्चिदिति ज्ञापनार्थमप्रकृतयापि सङ्ग[तस्यापि प्रसङ्ग]वचनमूर्ध्वमाग्रहायण्या

१. L. नाविरोधः

अष्टका:



"इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा ।
वधूर्जजान नवकं जनित्री त्रय एनां महिमानः सचन्तां स्वाहा ॥"

इति ॥२॥ अथ स्विष्टकृतः

"यस्यां वैवस्वतो यमस्सर्वे देवास्समाहिताः ।
अष्टका सर्वतोमुखी सा मे कामानतीतृपत् ॥
आहुस्ते ग्रावाणो दन्तानूधः पवमानः ।
अर्धमासांश्च मासांश्चाङ्गानि नमस्ते सुमनामुखि स्वाहा ॥"इति ॥३॥

अपरपक्षाष्टम्या इति । उक्तं हि शौनकेन—"हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इति । आचार्यमतान्यावर्चान्तय आचार्या स्वमतान्याहुः[?] । तेन हि चतुर्णामपरपक्षाणामिति न वक्तव्यम् । चत्वार एव ह्यपरपक्षा हेमन्तशिशिरयोश्चेति त्रित्वज्ञापनार्थम् । हेमन्तशिशिरयोस्त्रयाणामपरपक्षाणामष्टमीष्वष्टकाः कौषीतकेर्मतेन, किन्तु चतुर्णामिति । अष्टका इति कर्मनामधेयम् । तैषी, माघी, फाल्गुनी चाभिप्रेताः ॥

तासां......होति ॥ तासां प्रथमायां तैष्यामपरपक्षेऽष्टम्यां शाकं जुहोति, "इयमेव सा" इत्यनेन मन्त्रेण प्राप्तात्रार्थस्य शाकप्रसिद्धिः । तस्मात् पक्वशाकं जुहोति । अथ मतम्, अपक्वेऽपि दृश्यते शाकशब्दः, शाकमाहर्तुं वनं प्रस्थित इति; गौणं तद्भाविन्यपेक्षम्, ओदनं पच इत्येवम् । एवं तर्हि स्थालीपाकधर्मः स्यात्—मांसवत्स्थाल्यः[स्थाल्यां] पच्यत इति । नैतदस्ति, ओदनस्य स्थालीपाकप्रसिद्धिः; मांसस्य तु यो[?] हविषोरावापस्थानविधानात् त्रयाणां च प्रकृतिवदिति स्थालीपाकत्वं साधितम् । तस्मान्न स्थालीपाकधर्मः शाकस्य । तस्माद्यावदुक्तमत्र कर्म । पाणिना च होमः ॥ २ ॥

अथ......होति ॥ अथ स्विष्टकृत इति वचनात् "यस्यां वैवस्वतः" इत्यनेन मन्त्रेण स्विष्टकृदित्यभिसन्धाय जुहुयात् ॥ ३ ॥

१. T. यमेव
२. A² omits स्वाहा
३. T. अथास्यां
४. A¹. नोथः T. नोयः
५. T. र्ध्वे
६. T and A² omit इति
७. L. श्वेतमत्रित्व
८. L adds इममेव
९. A. पाकापत्रा पत्तार्थस्य
१०. L adds दिवि

मध्यमायां माघ्या वर्षे च महाव्याहृतयश्चतस्रो जुहोति "ये तातृषुः" इति चतस्रोऽनुद्रुत्य वपां जुहुयात्

"वह वपां जातवेदः पितृभ्यो यत्रैनान् वेत्थ सुकृतस्य लोके ।
मेदसः कुल्या उपस्रुतास्स्रवन्ति सत्यास्सन्तु यजमानस्य कामास्स्वाहा ॥"

इति । महाव्याहृतिभिश्चतसृभिः "ये तातृषुः" इति चतसृभिरष्टावाहुतीः स्थालीपाकोऽवदानमिश्रः ॥४॥

"अन्तर्हिता गिरयोऽन्तर्हिता पृथिवी मही मे ।
दिवा दिग्भ्यश्च सर्वाभिरन्यमन्तर्दधे पितृभ्योऽमुष्मै स्वाहा ॥

मध्यमायां......वदानमिश्रः ॥ मध्यमायां माघ्यामित्यर्थः, माघ्यावर्षे चापरपक्षेऽष्टम्या इयं चतुर्थी अष्टकापूर्वमनुक्त इह पशुस्थालीपाकश्च विधीयते। तस्मात् प्रकृतिवत् कृत्वा आवापस्थाने महाव्याहृतयश्चतस्रः "ये तातृषुः" इति चतस्रश्चर्चोऽनुद्रुत्य "वह वपाम्" इत्यनेन मन्त्रेण वपां जुहुयात्। अनुद्रुत्येत्युक्त्वेत्यर्थः। महाव्याहृतयः, "वह वपाम्" इति च मन्त्रः एकीभूतः[?] "ये तातृषुः" इति चतस्रः, एताभिः अष्टावाहुतीर्जुहोति। स्थालीपाकोऽवदानमिश्रो हविः स्यात्। इह व्याहृतयः ऋचः "वह वपाम्" इति च मन्त्रः[मन्त्रे?] पशुरेव दृश्यते । तस्मादिह दर्शनात् गोपशुरजो वा पशुः स्यात्, अनियमान्नियमो हि ज्यायान् ॥ ४ ॥

अन्त...णस्य ॥ एतैश्चतुर्भिः मन्त्रैश्चतस्र आहुतयो भवन्ति, या महाव्याहृतीनां स्थाने अन्यत्र करणस्य करणस्येस्येकीभूतस्य मन्त्रस्यावयवभूताभ्यो महाव्याहृतीभ्योऽन्यत्रानुद्रुत्येत्यत्र विकल्पो न भवतीत्यर्थः। अमुष्मै इत्यत्र चतुर्ष्वपि मन्त्रेषु तस्य नाम

१. A². मध्यावर्षे च
२. A² omits this word.
३. T omits this word.
४. A² omits this word.
५. A¹ and T. निहितान् पराके
६. A¹ and T. उपैनात्
७. A². तयश्चत
८. A². चतस्रः
९. A¹ and T. सर्वायुः
१०. A¹ and T omit this word.
११. A adds मध्यः मिश्र इति
१२. A. इह वक्त [?] स्था
१३. L. गोशुरजो वा शुः स्यात् नियमात्
१४. L. ज्यायात्

अन्तर्हिता ऋतवोऽहोरात्रा सुसन्धिकाः।
अर्धमासाश्च मासाश्चाङ्गानि नमस्ते सुमनामुखि स्वाहा ॥
यास्तिष्ठन्ति यास्स्रवन्ति या अद्भिः परितस्पुषीः।
अद्भिः सर्वस्य भर्तृभिरन्यतः पितुर्दधेऽमुष्मै स्वाहा ॥
यन्मे माता मलुलोभ चरत्यपतिव्रता।
रेतस्तत्पिता वृङ्क्तामाहुरन्योऽवपद्यतामसुष्मै स्वाहा ॥"

इति महाव्याहृतीनां वा स्थाने चतस्रोऽन्यत्रकरणस्य ॥५॥ उत्तमायामपूपान् जुहोति

"उकृथ्यश्चातिरात्रश्च सद्यस्क्रीश्छन्दसा सह।
अन्ये च ऋतवो देवा ऋषयः पितरस्तथा ॥

निर्देष्टव्यम्, 'अग्नये स्वाहा' इति भवति, "ये तातृषुः" इत्याग्नेयत्वादग्नेः प्रकृतत्वाद-प्रकृतप्रत्ययाच्च प्रकृतप्रत्ययो ज्यायान्। एवं तर्हि अग्नये स्वाहा इत्येव वक्तव्यं अल्पाक्षरनिर्देशार्थं व्यर्थं च, देवतानेकत्वज्ञापनार्थं तर्हि सर्वनाम्ना निर्देशः। शौनकेन "प्राजापत्यमेके। नक्षत्रदेवतामेके। ऋतुदेवतामेके। रात्रिदेवतामेके" इत्येवमनेकविधो देवताविकल्प उक्तः ॥ ५ ॥

उत्त......ष्टकृत् ॥ उत्तमायां पूर्वफल्गुन्यामपूपान् जुहोति "उकृथ्यश्चातिरात्रश्च" इत्यनेन मन्त्रेण। समानस्विष्टकृदिदं कर्म भवति। अशनस्विष्टकृत् इति शाकस्विष्टकृत् "यस्यां वैवस्वतो यमः" इति ॥ ६ ॥

१. A[1] and T. सन्धिषु
२. A[1]. स्वकार्धमासांश्चाङ्गानि...भ्योऽमुष्मै स्वाहा सुमनामुखाः स्वाहा ॥
T. मासांश्चाङ्गानि नमसौश्च सर्वान्यमन्तदधे सुमनामुखस्वाहा ॥
३. A[1] and T. अपः परितस्त्रिभिः षष्टिस्ताभिः सत्यस्याभिरमन्तर्दधे केनो मस्य स्वाहा ॥
L. अद्भिर्वसत्ता अद्भिस्सर्वस्य भस्तृभिरम्यमन्तर्दधे पितृभ्योऽमुष्मै स्वाहा ॥
४. A[1]. रेतस्तत्पितामहो T. पितामहो
५. A[1] and T omit वा
६. A[2]. विकरणस्य
७. L. इत्येकमनेक

ऋतवः सर्वभूतानि शिवाश्शान्ताश्च मे सदा ॥

सन्तु मेऽपूपकृतामष्टके समस्ते सुमनामुखि स्वाहा" ॥ इति समानं स्विष्टकृत् ॥६॥ श्वोऽन्वष्टक्यां पिण्डपितृयज्ञावृता गोपशुरजस्थालीपाको वा गोग्रासमाहरेदपि वा कक्षमुदहेदेषा मेऽष्टका इति ॥७॥ न त्वेव न कुर्वीत न त्वेव न कुर्वीत ॥८॥

इति कौषीतकगृह्ये तृतीयोऽध्यायः

श्वोऽन्व......केति ॥ यावदुक्तमिह कर्म । श्वोऽन्वष्टक्यां अष्टकामनु कर्तव्यम् । अष्टकानामश्वः अन्वष्टक्यं पिण्डपितृयज्ञावृता गोपशुः कर्तव्यम् । मांसेन पिण्डपितृयज्ञः कार्य इत्यर्थः । अजो वा कर्तव्यः पिण्डपितृयज्ञावृता स्थालीपाको वा पिण्डपितृयज्ञावृता पिण्डपितृयज्ञ एवाधिकृतोऽस्मिन् पक्षे मांसे त्वर्थलुप्तानामक्रियां एष एषा मेऽष्टकेत्युक्त्वा गोग्रासमपि वा हरेत् । कक्षमपि वा दहेत् ॥ ७ ॥

न त्वे......र्वीत ॥ एवमेवाष्टकां कुर्वीत, न त्वेव न कुर्वीत इत्येतयोः पक्षयोरतुल्यबलत्वार्थमुक्तम् ॥ ८ ॥

इति कौषीतकिगृह्ये[गृह्यविवरणे] तृतीयोऽध्यायः ॥

---

१. A[2] omits इति

२. A[1] omits this word.
 A[2]. समापर्न

३. A[1] and T. अग्निना वा

४. L. नामश्च

शान्ति कर्म

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

अथातश्शान्तिं करिष्यन् रोगार्तो वा भयार्तो वा, अयाज्यं वा याजयित्वा, अप्रतिग्राह्यं वा प्रतिगृह्य, त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीं चाभ्यावर्तयित्वा यावच्छक्नुयाद् गौरसर्षपकल्कैः स्नात्वा शुक्लमहतं वा वासः परिधाय[1] स्रवन्तीभिरद्भिरुदकुम्भं नवम् "भूर्भुवस्स्वः" इति पूरयित्वेतराभिर्वा गौरसर्षपदूर्वाव्रीहियवानवनीय गन्धमाल्यानां च यथोपपाद[2]मग्नये स्थालीपाकस्य हुत्वा सावित्र्यां सहस्रादूर्ध्वमा द्वादशात् सहस्रात् [3]स्वशक्तितः

## प्रथमः खण्डः

अथा......होति ॥ अथात ऊर्ध्वं रोगार्तो वा भयार्तो वा अयाज्यं वा याजयित्वाप्रतिग्राह्यं द्रव्यं प्रतिगृह्य वा दोषनिवृत्त्यर्थं शान्तिं करिष्यन् त्रिरात्रमुपोष्य। एकरात्रं वा। न च तुल्यो विकल्पः, आत्मशुद्ध्यर्थत्वात्। नित्यप्रयतश्चैकरात्रोपवासमेव करोति। शुद्धिं शङ्कमानस्तु त्रिरात्रादूर्ध्वमपि करोति। सावित्रीं चाभ्यावर्तयित्वा यावच्छक्नुयात्, ततः शुद्धो भूत्वा यदहः करोति तदहः गौरसर्षपकल्कैरुच्छाद्य स्नात्वा शुक्लमहतं वा वासः परिधाय तत उदकुम्भं नवम् "भूर्भुवस्स्वः" इति पूरयित्वा। इतराभिर्वा अद्भिः पूरयित्वा। स्रवन्तीभिरद्भिः पूरणमभिमतपक्षः। इतरथा वचनानर्थक्यं हि स्यात्। गौरसर्षपदूर्वाव्रीहियवांस्तस्मिन् कुम्भेऽवनीय गन्धमाल्यानां च यथोपपादमवनीयाग्नेरात्मनश्च मध्ये तमुदकुम्भं निधाय जुहोति, प्रयोगसौकर्यार्थः। ततो यथाप्रकृत्यग्नये स्थालीपाकस्य हुत्वा तस्मिन्नेवाग्नौ सावित्र्या

१. A¹ and T. परिधाप्य
२. A¹ and T. पातमग्नेः
३. T adds च
४. T. ऊर्ध्वमादशात् जुहोति
५. L omits भयार्तो वा
६. L omits वा
७. L adds वाग्नेरात्मनश्च



K—20

संपातमभिजुहोति ॥१॥ यावद्वा दोषनिवृत्तिः ॥२॥ उत्तरेणाग्निं प्रागग्रेषु कुशेषु प्राङ्मुख उपविश्यापोहिष्ठीयाभिस्तिसृभिरभिषिञ्चेत्[1] ॥३॥ शुक्लैरलङ्कृत्य महाव्याहृतयः सावित्रीं[2] स्वस्त्ययनानि च जपित्वा मुच्यते सर्वपापेभ्यो रोगेभ्यश्च भयेभ्यश्च ॥४॥ व्याधितश्चेत्तदशक्तश्चेत् पिता भ्राता वाचार्यपुत्रशिष्याणामन्यतमो[3] वान्वारब्धे कुर्यात् ॥५॥ "मुञ्चामि त्वा हविषा

सहस्रादूर्ध्वमा द्वादशात् सहस्रात् स्वशक्तितः सम्पातमभिजुहोति। तदुदकुम्भमभिजुहोति। सम्पातेनोदकुम्भे चाग्नौ जुहोतीत्यर्थः ॥ १ ॥

यावद्वा......वृत्तिः ॥ आ[4] दोषनिवृत्तेर्वा जुहुयात् ॥ २ ॥

उत्त......षिञ्चेत् ॥ एवं[5] हुत्वा प्राक् स्विष्टकृत उत्तरेणाग्निं प्रागग्रेषु कुशेषु प्राङ्मुख उपविश्य। कर्माभिमुख्यप्रसङ्गनिवृत्त्यर्थं प्रागग्रेषु प्राङ्मुख[6] इत्युक्तम्। आपोहिष्ठीयाभिः सम्पाताभिर्हुत्वा अद्भिरभिषिञ्चेत्। प्रकृतप्रत्ययादुत्तरत्र[7] दर्शनात्ताभिः इति गम्यते ॥ ३ ॥

शुक्लै......भ्यश्च ॥ शुक्लैर्गन्धमाल्यादिभिरलङ्कृत्य महाव्याहृतयः सावित्रीं स्वस्त्ययनानि च जपित्वाचार्यं स्वस्ति वाच्य स्थालीपाकेन स्विष्टकृतं हुत्वा शेषं परिसमापयेत्। फलस्तुतिरियम्[8]। स एवं कृत्वा मुच्यत एव सर्वपापेभ्यो रोगेभ्यश्च भयेभ्यश्च ॥ ४ ॥

व्याधि......कुर्यात् ॥ व्याधितः शान्तिकर्म कर्तुमशक्तश्चेत् तस्य पिता भ्राता वा कुर्यात्। तयोरभावे आचार्यपुत्रशिष्याणामन्यतमो वा अन्वारब्धे व्याधितं कुर्यात्। पिता वा भ्राता वेति मध्ये वाशब्दविधानादुत्तरालाभविधिरित्युक्तम् ॥ ५ ॥

१. A[1] and T. ञ्चयेत्
२. A[1] omits this word.
३. A[1] and T. शिष्यपुत्राणामन्य
४. L. यावत्
५. A omits एवं
६. A. प्रागग्र इति
७. A. प्रकृतिप्रत्ययादुत्तरद-
८. A. फलश्रुति

शान्तिकर्म



जीवनाय कम्'' इति त्रीणि सूक्तानि जपति पुरस्तात् स्वस्त्ययनानाम् ॥६॥ वरो दक्षिणा ॥७॥ एवं गावो गोष्ठस्य मध्ये रुद्राय स्थालीपाकस्य हुत्वा रौद्रैःसूक्तैरग्निमुपतिष्ठते॥८॥ संपाताभिः[तीभिः] सौमश्रीभिः सावित्रीमपरिमितां जपेद् वेतसशाखाभिः कुशमुष्टिभिर्वा त्रिः प्रदक्षिणं प्रोक्षति गोसूक्तैरुपस्थानं मुच्यते सर्वरोगेभ्यः ॥९॥ अथ ब्राह्मणभोजनम् ॥१०॥

मुञ्च......नानाम् ॥ ते पित्रादयोऽन्यार्थं कुर्वन्तः "मुञ्चामि त्वा हविषा जीवनाय कम्" इति त्रीणि सूक्तानि जपन्ति। पुरस्तात् स्वस्त्ययनानामयमन्यार्थं विशेषः ॥ ६ ॥

वरो दक्षिणा ॥७॥

एवं......ष्ठते ॥ एवमपि व्याधितानामेव कुर्यात्। तत्र त्वेतावान् विशेषः। रुद्राय स्थालीपाकस्य हुत्वा रौद्रैः सूक्तैरग्निमुपतिष्ठेत अग्नये जुहुयाद् द्वौ मासौ; ऊर्ध्वमपि विशेषो वक्ष्यते ॥ ८ ॥

संपा......स्थानम् ॥ याः सँम्पातीभिर्हुत्वा[र्हुताः]आपस्ताभिः वेतसशाखाभिः कुशमुष्टिभिर्वा सावित्रीमपरिमितं जपेत्, पुनः पुनरावर्तयन् प्रदक्षिणं प्रोक्षति। गोसूक्तैरुपस्थानं गां च करोति। अथ स्तुतिवचनम्—मुच्यते सर्वरोगेभ्यः ॥ ९ ॥

अथ ब्राह्मणभोजनम् ॥ कर्तव्यम्। इदमुभयत्र साधनम् ॥ १० ॥

१. A[1] and T. च जपेत्

२. A[1]. नमन्यार्थं विशेषो वरो
T. स्त्ययनमन्याभिः

३. T omits वरो...जपेत्

४. A[1]. रौद्रैः

५. A[1] and T. वेदशाखा-

६. A[1] and T add सावित्रीमपरिमितं जपति and omit it earlier.

७. A. संपातीर्हुत्वा

८. L. आस्ताभिः

## अथ द्वितीयः खण्डः

श्रावण्यां पौर्णमास्यां हस्तेन श्रवणेन वा अक्षतसक्तूनां स्थालीपाकस्य वा जुहुयात् "अग्नये स्वाहा" "विष्णवे स्वाहा" "श्रावण्यै स्वाहा" "पौर्णमास्यै स्वाहा" "वर्षाभ्यः स्वाहा" इति ॥१॥ लाजानक्षतसक्तूंश्च सर्पिषा सन्नीयाग्नौ जुहुयात् "दिव्यानां सर्पाणामधिपतये स्वाहा" "दिव्येभ्यः सर्पेभ्यः स्वाहा" इति॥ २॥ उत्तरेणाग्निं प्रागग्रेषु कुशेषु शुचौ वा देशे "दिव्यानां सर्पाणामधिपतिरुन्नी-

## अथ द्वितीयः खण्डः

श्राव......इति ॥ श्रावण्यां पौर्णमास्यां श्रवणसंयुक्तायाम् । श्रावण्यां पौर्णमास्यां इति पाठः । अक्षतसूक्तानां स्थालीपाकस्य वा जुहुयात् । उवसक्तुपक्षे यावदुक्तं कर्म । "अग्नये स्वाहा" "विष्णवे स्वाहा" "श्रावण्यै[स्वाहा]" "पौर्णमास्यै स्वाहा" "वर्षाभ्यः स्वाहा" इति संशयनिवृत्त्यर्थं स्वाहाकाराम्नानम् । संशयो हि श्रावण्यै पौर्णमास्यै इति ॥ १ ॥

अत्र—

लाजा......इति ॥ लाजानक्षतसक्तूंश्च सर्पिषा सह सन्नीय तस्मिन्नेवाग्नौ "दिव्यानां सर्पाणामधिपतये स्वाहा" "दिव्येभ्यः स्वाहा" इति द्वे आहुती जुहुयात् । अग्नावित्यधिकवचनम् । तस्मिन्नेवेति नियमार्थमुक्तम् । नैतदस्ति ; अनुक्तेऽपि हि स एव नित्यः शालाग्निः ; उक्तं हि—"पञ्चसु बहिश्शालायाः" इत्यत्र । एवं तर्हि पुनरग्नाविति कर्मान्यत्वार्थम् । अन्यदिदं सर्पबलिकर्म, अन्यत्पूर्वोक्तं श्रवणकर्म इति च । तथा चैवोक्तं शौनकेन "श्रावण्यां पौर्णमास्यां श्रवणकर्म सर्पबलिकर्म च" श्रवणकर्मणोऽनन्तरं तदहरेवारब्धव्यम् ॥ २ ॥

उत्तरेण......उपहरेत् ॥ उत्तरेणाग्निं प्रागग्रेषु कुशेषु कर्माभिमुख्यनिवृत्त्यर्थम्, उदगग्रनिवृत्त्यर्थं वा प्रागग्रेष्वित्युक्तम् । शुचौ वा देशे "दिव्यानां सर्पाणां अधिपति-

१. A[1] and T omit हस्तेन श्रवणेन वा
२. A[2] and T omit स्वाहा
३. A[1] and T. जुहोति
४. A[1] and T omit दिव्येभ्यः सर्पेभ्यः स्वाहा
५. L omits लाजान्...स्वाहेति
६. L. सर्पबलिकर्म श्रवणकर्म च
७. A. तदहे
८. A omits उत्तरेण...हरेत्

सर्पबलि:



यताम्'' ''दिव्याः सर्पा उन्नीयन्ताम्'' इत्यपो निनयति। ''दिव्यानां सर्पाणामधिपतिः प्रलिखताम्'' ''दिव्याः सर्पाः प्रलिखन्ताम्'' इति फणेन वेष्टयति। ''दिव्यानां सर्पाणामधिपतिरनुलिम्पताम्'' ''दिव्याः सर्पा अनुलिम्पन्ताम्'' इति पन्नगस्य पात्राणि निनयति। ''दिव्यानां सर्पाणामधिपतिस्सुमनस्यताम्'' ''दिव्याः सर्पास्सुमनस्यन्ताम्'' इति सुमनस उपहरति। ''दिव्यानां सर्पाणामधिपतिराच्छाद्यताम्'' ''दिव्याः सर्पा आच्छाद्यन्ताम्'' इति सूत्रतन्तुमुपहरति। ''दिव्यानां सर्पाणामधिपतिराञ्जताम्'' ''दिव्याः सर्पा आञ्जन्ताम्'' इति

रुन्नीयताम्'' ''दिव्याः सर्पा उन्नीयन्ताम्'' इत्यपो निनयति। एवमुत्तरत्र तत्क्रियायुक्ता मन्त्राः प्रत्येतव्याः। ततः फणेन वेष्टयति। ततो वर्णकस्य पात्रं निनयति। ततः सुमनस उपहरति। ततः सूत्रतन्तुमुपहरति। ततः कुशतरुणेनोपघाति उपहर[रती]त्यर्थः। अञ्जनस्य करोति। तत आदर्शेनेक्षयति। एवमान्तरिक्षाणां पार्थिवानां दिव्यानामिति करोति। सर्वत्र च तथैव मन्त्रा योज्याः। त्रिस्त्रिरपो निनयनादीन्योगानियुनक्ति[?]। पूर्वमुच्चैस्तरामुच्चैस्तरां नीचैस्तरां नीचैस्तरां कथमिति चेत्? ''दिव्यानां सर्पाणामधिपतिरुन्नीयताम्'' ''दिव्याः सर्पा उन्नीयन्ताम्'' इत्याकाशे अपो निनयति। द्वितीयं ततो नीचैस्तराम्। तृतीयं ततोऽपि नीचैस्तराम्। सकृदेव मन्त्रवाचनम्, न होमस्य त्रित्वमस्ति, उच्चैर्नीचैरिति संभवात्। ततस्तदहःप्रभृति रात्रौ वाग्यतः सोदकं बलिं दर्व्या आ उपघातमुपहरेत्। एवं आ प्रत्यवरोहात्। कथम्, केन बलिं हरति? इत्युच्यते। तत् ''दिव्यानां सर्पाणामधिपतये नमः'' ''दिव्येभ्यः सर्पेभ्यः'' इत्यपो दत्त्वा तत ओदनं दर्व्योपहत्य तेनैव नमस्कारान्तेन मन्त्रेण बलिमुपहरेत्। कुत एतल्लभ्यते? वैश्वदेवे द्यावापृथिवीये च बलिहरणे दृष्टत्वात्॥

१. A[1] and T omit दिव्याः सर्पा उन्नीयन्तां
२. T omits दिव्यानां.. प्रतिलिखन्तां and adds it after अनुलिम्पन्ताम्
३. A[1]. आवध्नीतां
४. A[1]. आवध्नन्तां
५. A[2]. सुमनस उपहरति
६. T omits दिव्यानां.....उपहरति
७. A[2]. सूत्रं
८. A. उपलातं
९. A omits this word.
१०. A. संभावास्तदहः
११. A omits this word.

कुशतरुणेनोपघातमञ्जनस्य करोति। "दिव्यानां सर्पाणामधिपतिरीक्षताम्" "दिव्यास्सर्पा ईक्षन्ताम्" इत्यादर्शेनेक्षयति। एवमान्तरिक्षाणां पार्थिवानां दिव्यानां त्रिस्त्रिरुच्चैस्तरां नीचैस्तरां इत्योदनद्रव्ये[दर्वे]णोपघातमा प्रत्यवरोहाद् रात्रौ वाग्यतस्सोदकं बलिमुपहरेत् ॥३॥ उपसर्गः ॥४॥

ननु दर्शनं लक्षणं न भवतीत्युक्तम्, लक्षणसिद्धस्य बलाधानं दर्शनं करोतीति; सत्यमेवमुक्तम्; न वयमिहापि केवलेन दर्शनेनेति ब्रूमः। पुरस्ताद्धि प्राच्यां क्षेत्रमर्यादायां गोमयेन परिमण्डलमित्युक्तेऽपि अभिप्रेतार्थसिद्धौ द्यावापृथिवीयं बलिमुपहरेदित्यधिकमुक्तम्। तस्याधिकवचनस्य इदं प्रयोजनम्—अन्यत्रापि बलिहरणं भवत्येवमेवेति। तत एवं सिद्धस्य दर्शनमपि बलाधानं करोति। सोदकं चेति परिसङ्ख्यार्थं गन्धादीनां द्यावापृथिवीये आम्नातानां निवृत्त्यर्थम्। दर्वेणेति कोऽयं निर्देशः? ननु दर्वी अन्यलिङ्गोऽपि शब्दो विद्यत इति ब्रूमः। वाग्यतावस्थिताय एनं बलिमन्य उपपादयेत् ॥ ३ ॥

उपसर्गः ॥ उपसर्ग इत्यात्मनः कर्मणः उपसर्गः प्रारम्भ इत्यर्थः। स उपसर्गस्तदेव कृत्वा उत्सृज्यते ॥

इह प्रयोग उच्यते—लाजानक्षतसक्तूंश्च सर्पिषा सन्नीय श्रावण्यां पौर्णमास्यां श्रवणकर्म कृत्वा ततः "दिव्यानां सर्पाणामधिपतये स्वाहा" "दिव्येभ्यः सर्पेभ्यः स्वाहा" "आन्तरिक्षाणां सर्पाणामधिपतये स्वाहा" "आन्तरिक्षेभ्यः सर्पेभ्यः स्वाहा" "पार्थिवानां सर्पाणामधिपतये स्वाहा" "पार्थिवेभ्यः सर्पेभ्यः स्वाहा" "दिश्यानां सर्पाणामधिपतये स्वाहा" "दिश्येभ्यः सर्पेभ्यः स्वाहा" एतावष्टावाहुतीर्हुत्वा, उत्तरेणाग्निं प्रागग्रेषु कुशेषु शुचौ देशे "दिव्यानां सर्पाणामधिपतिरुन्नीयताम्" "दिव्याः सर्पा उन्नीयन्ताम्" इति यथोक्तमपो निनयति। "आन्तरिक्षाणां सर्पाणामधिपतिरुन्नीयताम्" "आन्तरिक्षाः सर्पा उन्नीयन्ताम्" इति तथैवापो निनयति। ततः "पार्थिवानां सर्पाणामधिपतिरुन्नीयताम्" "पार्थिवाः सर्पा उन्नीयन्ताम्" इति तथैवापो निनयति। एवं सर्वत्र योज्यम्। आदर्शेक्षणान्तं कृत्वा ततः "दिव्यानां सर्पाणामधिपतये नमः" "दिव्येभ्यः सर्पेभ्यो नमः" इत्यपो

१. T omits आन्त...हरेत्
A[1]. आम्तरिक्ष्याणां दिव्यानां पार्थिवानां
L. अन्तरिक्षाणां

२. A[1] omits this word.
३. L omits न
४. A omits इति
५. A omits this word.

आश्वयुजी



## अथ तृतीयः खण्डः

आश्वयुज्यां पौर्णमास्यामैन्द्रं पायसः ॥१॥ "अश्विभ्यां स्वाहा" "अश्वयुग्भ्यां स्वाहा" "आश्वयुज्यै पौर्णमास्यै स्वाहा" "शरदे स्वाहा" "पशुपतये स्वाहा" "पिङ्गलाय स्वाहा" इति षट् पृषातकस्य "आ गावो अग्मन्" इति सूक्तेन प्रत्यृचं स्थालीपाकस्य हुत्वा मातृभिर्वत्सान् संसृजति तां रात्रिम् । अथ ब्राह्मणभोजनम् ॥२॥

दत्वा । एवमेव बलिं हरन्ति । ततः "आन्तरिक्षाणां सर्पाणामधिपतये नमः" "आन्तरिक्षेभ्यः सर्पेभ्यो नमः" इत्यपो दत्वा, एवमेव बलिं हरति । ताः[ततः] "पार्थिवानां सर्पाणामधिपतये नमः" "पार्थिवेभ्यः सर्पेभ्यो नमः" इत्यपो दत्वा, एवमेव बलिं हरति । ततः "दिश्यानां सर्पाणामधिपतये नमः" "दिश्येभ्यः सर्पेभ्यो नमः" इत्यपो दत्वा, एवमेव बलिं हरति । एवमा प्रत्यवरोहाद् रात्रौ बलिं हृत्वा प्रत्यवरोहेऽष्टावाहुतीर्हुत्वा आदर्शेक्षान्तं कृत्वोत्सृजेत् ॥ ४ ॥

## अथ तृतीयः खण्डः

आश्व......यसः ॥ आश्वयुज्यां पौर्णमास्यामैन्द्रः पायसो होतव्यः । स्थालीपाक एव पयोभूयस्त्वात् पायस इत्युच्यते । तस्माद्यथाप्रकृति भवति । ततस्तस्मिन्नेव कर्मण्यावापस्थाने "इन्द्राय स्वाहा" इति स्थालीपाकं हुत्वा—

अश्विभ्यां......भोजनम् ॥ "अश्विभ्यां स्वाहा" "अश्वयुग्भ्यां स्वाहा" "आश्वयुज्यै पौर्णमास्यै स्वाहा" "शरदे स्वाहा" "पशुपतये स्वाहा" "पिङ्गलाय स्वाहा" इत्याज्येन षळाहुतीर्हुत्वा "आ गावो अग्मन्" इति सूक्तेन पृषातकस्य जुहोति । पृषातकमित्याज्यसंयुक्तं पयः, तत्पाणिना जुहोति । ततः कर्म परिसमाप्य तां रात्रिं मातृभिर्वत्सान् संसृजन्ति । अथ ब्राह्मणभोजनं कारयेत् ॥

१. A1 and T. पायसं स्थालीपाकेन श्रपयित्वा
२. A2 adds स्वाहा
३. A2 omits शरदे स्वाहा
४. A2. पृष्ठातकस्य
५. A1 and A2 omit प्रत्यृचं... हुत्वा
६. A1. Space is left out for writing मातृभिर्वत्सरान्
७. L omits आज्येन

## अथ चतुर्थः खण्डः

आग्रहायण्यां प्रत्यवरोहेत् ॥१॥ रोहिण्यां प्रोष्ठपदासु वा प्रातः शमी-पलाशमधूंकापामार्गशिरीषोदुम्बरकुशतरुणबदरीणां च ॥२॥ तेषां मुष्टिमादाय ॥३॥ सीतालोष्टं च ॥४॥ उदपात्रे निधाय तस्मिन्निमंज्ज्य निमज्ज्यं ॥५॥ "अप नः शोशुचदघम्" इति सूक्तेन त्रिः प्रदक्षिणं प्रोक्षति शरण्येभ्यः पाप्मनोऽपहत्यै ॥६॥ उत्तरतो निधाय ॥७॥ मधुपर्को दक्षिणा ॥८॥

## अथ चतुर्थः खण्डः

आग्र......रोहेत् ॥ आग्रहायण्यां प्रत्यवरोहेत् । प्रत्यवरोहणं कुर्यादित्यर्थः । पौर्णमास्यामित्यधिकारः ॥ १ ॥

रोहि......दरीणां च ॥ रोहिण्यां प्रोष्ठपदासु वा प्रातश्शमीपलाशमधूका-पामार्गशिरीषोदुम्बरकुशतरुणबदरीणां च ॥ २ ॥

तेषां मुष्टिमादाय ॥ मुष्टिमिति प्रमाणमुक्तम् । बदरीणाञ्च मुष्टिम् इत्येतवता सिद्धे पुनस्तेषां इति वचनं तेषां सर्वेषां पृथङ्मुष्टिमादाय इत्येवमर्थम् ॥ ३ ॥

सीतालोष्टं च ॥ सीतालोष्टमिति सस्यलोष्टं सस्यमूलं गृहीतम् । लोष्टं च ॥

उदपात्रे......निमंज्ज्य ॥ तां मुष्टिं तस्मिन्नुदपात्रेऽवधायावधाय प्रोक्षति ॥

अप नः......हत्यै ॥ गृहशान्त्यर्थमिति फलस्तुतिः ॥ ६ ॥

उत्तरतो निधाय ॥ निदधातीत्यर्थः । एवं कृत्वोत्तरत उदपात्रं च मुष्टिं च निदधाति ॥ ७ ॥

मधुपर्को दक्षिणा ॥ आचार्याय मधुपर्कं ददाति । द्रव्यनिर्देशो यथाग्रहणे ॥

१. A[1] and T. मधुपका

२. A[2]. निमन्त्र्य

३. A[1] and T omit this word.

४. A[1] and T. कुशतरुणेभ्यः

५. A omits this word.

"ग्रीष्मो हेमन्त उत नो वसन्तश्शरद्वर्षास्सुवितं नोऽस्तु ।
तेषां पशूनामृतूनां शतशारदानां निवात एषामभये स्याम स्वाहा ॥"
"अप श्वेतपदा जहि पूर्वेण चापरेण च ।
सप्त च वारुणीरिमास्सर्वाश्च राजबान्धवैः स्वाहा ॥"

"श्वेताय[1] वैदर्भाय स्वाहा" "विदर्भाय स्वाहा" "तक्षकाय वैशालेयाय[2] स्वाहा" "विशालाय स्वाहा" इत्याज्येन ॥९॥ "सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिभूषन्तां[3] सुवर्षाः सन्तु नो वर्षाः शरदः[4] शं भवन्तु नः" इत्यग्निमुपतिष्ठते । "स्योना पृथिवी भव" इति पृथिवीमनुमन्त्र्य "शं नो भवन्तु वाजिनः" इति शमीशाखयाभिमृज्य "समुद्रादूर्मिः" इत्यभ्युक्ष्य प्रस्तरमास्तीर्य ज्येष्ठदक्षिणा-पार्श्वैः संविशेरन् ॥१०॥ "प्रति ब्रह्मन् प्रतितिष्ठामि यज्ञे" इति दक्षिणैः ॥११॥ "प्रति पशुषु प्रतितिष्ठाम्यन्ने" इति सव्यैः ॥१२॥ "प्रत्यश्वेषु प्रतितिष्ठामि

ग्रीष्मो......ज्येन ॥ "ग्रीष्मो हेमन्तः" इत्यारभ्य षळाहुतीर्जुहुयादाज्येन । आज्येनेति द्रव्यान्तरवद्विधानं प्रकृतिनिवृत्त्यर्थम् । तस्माद्यावदुक्तमिह कर्म ॥ ९ ॥

सुहे......शेरन् ॥ "सुहेमन्तः" इत्यनेन मन्त्रेणाग्निमुपस्थाय "स्योना पृथिवि" इति पृथिवीमभिमन्त्र्य "शन्नो भवन्तु वाजिनः" इति शमीशाखया तं देशं विसृज्य "समुद्रादूर्मिः" इत्यभ्युक्ष्य तन्त्रप्रस्तरमास्तीर्य ज्येष्ठं दक्षिणतः कृत्वा । स च तस्य भार्यापुत्राश्च संविशेरन् । पार्श्वैर्ज्येष्ठदक्षिणा इति यथाज्येष्ठमित्यर्थः ॥ १० ॥

प्रति......दक्षिणैः ॥ "प्रति[5] ब्रह्मन् प्रतितिष्ठामि यज्ञे" इति दक्षिणैः पार्श्वैः संविशेरन् ॥ ११ ॥

प्रति......सव्यैः ॥ "प्रति पशुषु प्रतितिष्ठाम्यन्ने" इति सव्यैः संविशेरन् ॥

प्रति[7]......दक्षिणैः ॥ ततः[6] "प्रत्यश्वेषु प्रतितिष्ठामि क्षत्रे" इति दक्षिणैः पार्श्वैः संविशेरन् ॥ १३ ॥

१. A[1] and T add न वै श्वेतस्याध्याहारेऽहिर्जघान किञ्चन
२. T omits वैशा...लाये
३. A[1] and T. सुविभूषन्तः
४. A[1] omits this word.
५. A omits प्रति...दक्षिणैः
६. A adds ततः
७. L omits ततः...दक्षिणैः



K—21

क्षते" इति दक्षिणैः ॥१३॥ "प्रत्यप्सु प्रतितिष्ठाम्यमृते" इति सव्यैः ॥१४॥ "प्रति प्रजायां प्रतितिष्ठामि पुष्टौ" इति दक्षिणैः ॥१५॥ प्रस्तरे तां रात्रिं शेरते ॥१६॥ "उदीर्ध्वं जीवः" इत्युत्थाप्य "नमो मित्रस्य" इत्यादित्यमुपस्थाय यथासुखमत ऊर्ध्वम् ॥१७॥ "सुत्रामाणम्" इति शय्यामारोहेत्॥१८॥ चैत्र्यां पौर्णमास्यां कर्कन्धुपर्णानि मिथुनानां च यथोपपादं पिष्टस्य कृत्वा

[1]प्रत्यप्सु......सव्यैः ॥ [2]"प्रत्यप्सु प्रतितिष्ठाम्यमृते" इति सव्यैः पार्श्वैः संविशेरन् ॥ १४ ॥

[3]प्रति प्रजायां......दक्षिणैः ॥ [4]ततः "प्रति प्रजायां प्रतितिष्ठामि पुष्टौ" इति दक्षिणैः पार्श्वैः संविशेरन् ॥ १५ ॥

[5]प्रस्त......रते ॥ [6]तस्मिन्नेव प्रस्तरे तां रात्रिं [7]सर्वे शेरते ॥ १६ ॥

[8]उदी......अत ऊर्ध्वम् ॥ ततः प्रभातायाम् "उदीर्ध्वं जीवः" इति स तानुत्थाप्य "नमो मित्रस्य" इत्यादित्यमुपतिष्ठते । अत ऊर्ध्वं यथासुखं सर्वे गच्छन्ति । नैतद्वक्तव्यम् । अर्थप्राप्तं हि । एवं तर्ह्येतत्सकृत्कृत्वा अत ऊर्ध्वं यथासुखं करोति, न प्रतिसंवत्सरमवश्यं कर्तव्यम् । सकृत् कृत्वा पुनरक्रियायामदोषः । क्रियायामभ्युदय इति यथासुखमित्युक्तम् ॥ १७ ॥

सुत्रामाणमिति शय्यामारोहेत् ॥१८॥

चैत्र्यां......लिकाः ॥ ततश्चैत्र्यां पौर्णमास्यां कर्कन्धुपर्णानि मिथुनानां च वृक्षाणां पर्णानि । मिथुना नाम वृक्षा अस्मिन्देशे न सन्ति । यथोपपादवचनात् कर्कन्धुप्रयोगसिद्धिः । यथोपपादं यथासम्भवं पिष्टं कृत्वा ऐन्द्राग्नः तुण्डिलः कार्यः । तुण्डिलापक्षिरौद्राश्च गुळकाः कार्याः । तथा कृत्वा शुचौ देशे निदधाति । नास्ति हि वचनस्यातिभारः । यावदुक्तं च कर्तव्यमेव । अदृष्टफलेषु कर्मसु युक्तिर्न परीक्ष्या ।

१. A adds ततः
२. A omits प्रत्यप्सु...सव्यैः
३. A adds ततः
४. A omits ततः...दक्षिणैः
५. A omits this sūtra.
६. L omits तस्मिन्नेव
७. A. सर्वैः
८. A. पत्राणि

ऐन्द्राग्नस्तुण्डिलो रौद्रशुलिकाः ॥१९॥ लोकतो नक्षत्राण्यन्वावृतश्च लोकतो नक्षत्राण्यन्वावृतश्च ॥२०॥

इति कौषीतकगृह्ये चतुर्थोऽध्यायः

देवताविधानं किमर्थम् इति चेत्, ज्ञापनार्थम्; यथा पितृमेधे "मैत्रावरुणीमामिक्षाम्" इति ॥ १९ ॥

लोक......तश्च ॥ लोकतः शास्त्रान्तर इत्यर्थः । अनाम्नातनक्षत्रेषु कर्मसु लोकतो नक्षत्राणि ग्राह्याणि, नानियमः । अथ कस्मात् पुण्ये नक्षत्रे विदधाति? नैष दोषः; तत्र स्वशास्त्रविधानं नित्यम् । इदं च नित्यमन्वावृत इत्यनुप्रयोगः । अस्माभिरभिहितानि यानि स्मार्तानि कर्माणि शास्त्रान्तरविहितानि तान्यप्यनुविहितानि । एवमेव मन्तव्यानि । अथवा एकस्मिन्नपि कर्मणि अव्यक्ता अनुप्रयोगा अन्यत्र प्रत्यक्षाश्च एतेऽनुप्रयोक्तव्याः ॥ २० ॥

इति कौषीतकगृह्ये[गृह्यविवरणे] चतुर्थोऽध्यायः ॥

---

१. A. लोक इति

# अथ पञ्चमोऽध्यायः

## प्रथमः खण्डः

दर्शपूर्णमासादयः पौण्डरीकपर्यन्ताः श्रौताः पदार्था व्याख्याताः। चत्वारश्च पाकयज्ञा निपुणतरमुपपादिताः। इदानीं पितृमेधव्याख्याया अवसरः प्राप्तः। कः पुनरस्य क्रम इति? ऊर्ध्वं हविर्यज्ञप्रायश्चित्तेभ्य इति वदामः। तत्र हि श्रुतिवाक्यं पितृमेधस्य विधायकम्। "अथ यत्स्वैरग्निभिर्यजमानं संस्कुर्वन्ति देवरथो वा अग्नयो देवरथमेवैनं तत्समारोपयन्ति, स एतेन देवरथेन स्वर्गं लोकमेति सुकृतां यत्र लोकः" इति त्रयोदशाध्याये "दग्ध्वास्थीन्युपनह्य" इत्यत्र पाठ इति केचित्। नैतदुपपन्नम्। प्रसिद्धं हि प्रेतस्य दहनमनूद्यते तत्र "पुत्रं वा भ्रातरं वा दीक्षयित्वा सह यजेरन्" इत्येतदत्र विधीयते। तस्मात् श्रुतिक्रमः[1]। किमर्थं पुनर्बाह्यपाठः क्रियते? रहस्यत्वात् धर्मवैपरीत्यज्ञापनाय। यथा महाव्रतमेकादशद्वादशयोरध्याययोर्मध्ये पठितव्यं सत् रहस्यत्वात्[2] बहिः पठ्यते। तत्रेदं विचार्यते—पितृमेधस्य कर्ता किं तत्फलेन[3] सम्बद्ध्यते, आहोस्वित्[4] प्रेत इति? कर्तेति केचित्; कर्तुः फलसंयोगवचनात्। यो हि यस्याः क्रियायाः कर्ता स तदीयेन फलेन सम्बद्ध्यत[5] इति। अनैकान्तिकमेतत्। पाचका अन्यार्थमपि[6] पचन्तो दृश्यन्ते; शब्दावगम्यश्च वैदिकानां फलसंयोगः, नानुमानविषयश्च। संस्कर्तव्यास्याहिताग्नेः फलमाह "स्वैरग्निभिर्यजमानं संस्कुर्वन्ति" इति द्वितीयाविभक्तिः श्रूयते। कर्तुरिति[कर्तुर्हि] यत् क्रियया प्राप्तुमिष्टतमं तत् कर्मसंज्ञम्; तत्र च द्वितीयामामनन्ति "कर्मणि द्वितीया" इति। यजमानशब्दादुच्चरन्ती द्वितीयाविभक्तिर्यजमानशब्दवाच्यस्यार्थस्य प्राधान्यमवगमयति। तस्मात्संस्कारार्थमेतदिति मन्यामहे। संस्कृतैः पुरोडाशादिभिर्यथा यागसिद्धिः, तथा यजमानेन संस्कृतेन कर्तुः प्रयोजनसंसिद्धिः इति चेत्, न, अश्रवणात्; पुरोडाशादिभिः संस्कृतः यागः श्रूयते। यागाच्च फलम्। इह संस्कृतेन यजमानेन कर्तुरन्यत् प्रयोजनं न श्रूयते। न चाप्रमाणं कल्पयितुं शक्यम्। फलसंयोगश्च यजमानस्य श्रूयते, "स

१. L. श्रुतिधर्मकर्म किमर्थं
२. A. समुद्रहरस्य
३. A. तत्फलो
४. A. आहोस्वि
५. A. संबुध्यते
६. A. अन्यार्थ

## प्रथमः खण्डः

जीवतः कर्माणि विसमाप्ते चेदभिप्रेयात् ॥१॥ मरणान्तमेकाहेषु ॥२॥

पतेन देवरथेन" इति। बहुवचनान्तत्वात् कर्तृनिरपेक्षम्। "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यात्मनेपदश्रवणात् य आधाता तस्य अग्नय उपकुर्वन्ति, नान्यस्येति। अग्नीनां यथानाश्च[?]प्रतिपत्तिरत्र; श्रूयते चान्यत्र न प्रतिपद्यते। तस्मादपि प्रेतस्य फलम्।

"निषेकादीनि कर्माणि श्मशानान्तानि सर्वशः।
यः करोति वृतो यस्य तस्य [१]श्विगी[स तस्यर्त्विगि]होच्यते॥"

इति विस्पष्टं भगवता मनुना अयमर्थः कीर्तितः। कथं पुनरजीवतः ऋत्विग्याज्यलक्षणः सम्बन्ध इति विप्रतिविधाय मरणात्तदीयद्रव्यविनियोगाच्च शुनस्कर्णस्तोमवत्। यथा शुनस्कर्णस्तोमे "ब्राह्मणाः समापयत मे यज्ञम्" इति सम्प्रेष्य यजमानेन म्रियते, पुनस्तदीयेन द्रव्येण कर्मशेषमृत्विजः परिसमापयिष्यन्ति, सुप्रसिद्धत्वात्। अप्रतिविधाय केचिन्म्रियन्ते। सर्वप्राणिभिरभ्युपगतमेतत्। ततः प्रेतस्यैव फलम्। तस्यैवेदमादिमं सूत्रम्—

जीतवः......प्रेयात् ॥ जीवतो यजमानस्य कर्माणि फलदायीनि। विसमाप्ते कर्मणि यजमानो यदि प्रेयात् शरीरमुत्सृजेदित्यर्थः। परिसमाप्तिवचन उत्सर्गः। "अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात्" इत्यत्र 'विजामातुः असमाप्तजामातुः' इति भगवता यास्कमुनिना कीर्तितम्। बहुयजमानके सत्रकर्मणि जीवतो यजमानस्य फलसंयोगो भवति, न प्रेतस्य "यजेत स्वर्गकामः" इत्युच्यते। "पूर्वापरीभूतं भावमाख्यातेनाचष्टे, व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्" इति वचनात् यः परिसमापयति तस्य फलसम्बन्धः। समाप्तिरेव शब्दार्थः; उपक्रमोऽर्थगृहीत इति केचित्। तथापि जीवतः कर्माणि इत्युपपन्नम्। अपरे व्याचक्षते। जीवता यानि कर्माणि प्रारब्धानि, तानि कर्माणि मध्ये मृतस्यापि उपकरिष्यन्ति। शुनस्कर्णस्तोमेऽन्यो दीक्षते, पुत्रो वा भ्राता वा; स तस्यर्त्विकृत्वानीयः अग्निभिरभिसम्बन्धात्; न हि पराग्निषु क्रियमाणं कर्म परस्य फलदं भवति।

१. A[1]. जीवितः
२. L. र्थि
३. A. यजमानो म्रियते
४. A omits एव
५. A. वाग्निषु

**नास्ति तस्य समापनम् ॥३॥ प्रेतमाहिताग्निं ज्ञात्वाजस्रानग्नीन् कुर्वन्ति ॥४॥**

उपग्रहविशेषादुभयोः फलाभावात्—इति केचिन्मन्यन्ते । आरभ्य परिसमापयन् फलेन सम्बद्धयत इति शब्दार्थः । इह चान्य आरभते, अन्यः परिसमापयिष्यति । सर्वथा इदं सूत्रं योजयितुं शक्यते । सर्वगतस्यात्मनो गमनाभावेऽपि प्राक्तनशरीराभिसम्बन्धं धर्माधर्मनिमित्तं तत्प्रक्षये समुत्सृजन् प्रयातीत्युपचर्यते ॥ १ ॥

मर......हेषु ॥ मरणान्तो[मरणमन्ते] यस्य तदिदं मरणान्तं कर्म । परार्थं हि समाप्तिः । न हि तस्य पारार्थ्यम् । अहीनेष्वप्ययं न्यायस्तुल्यः । तस्मादेकाहशब्दो लक्षणार्थः । एकाहेष्वहीनेषु चेति । किमर्थं पुनस्तथा सूत्रं न प्रणीतम् ? अहीनानामुभयधर्मत्वज्ञापनार्थम् । एककर्तृका अनेककर्तृकाश्चाहीनाः श्रूयन्ते । "यदेकविधं तदेकरात्रेणाप्नोति" इत्युपक्रम्य एकवचनार्थैः शब्दैरभिसंबन्धादेककर्तृका अस्माकमहीना अदीक्षिता दीक्षितं याजयेयुरिति चोक्तम् । "द्विप्रभृतयोऽष्टाचत्वारिंशत्पर्यन्ता यजमाना वा अहीनेन संयजेरन्" इति श्रुत्यन्तरम् । एककर्तृकत्वमेकाहैस्तुल्यो न्यायः । [१]अनेककर्तृकत्वे हि सत्रैः ज्ञापनार्थमेकाहेष्वित्युक्तम् । हविर्यज्ञमध्यमृतस्याप्येकाहैः तुल्यो न्यायः, न्यायप्रदर्शनार्थत्वात् सूत्रस्य ॥ २ ॥

नास्ति......पनम् ॥ तस्यैकाहस्य समापनं समाप्तिर्न विद्यते । ननु च पूर्वेणैतत् सिद्धम्, मरणान्तिकमेकाहेष्विति । मरणान्तं चेत् कर्म, कथं समापनशङ्का? समापनप्रकारं केचिद्विदधति—"पात्र्यां हविषि निधाय द्रोणकलशे सोमम् 'यद्देवाः' इति जुहुयात्" इति । तदपि मरणान्ततया प्रायश्चित्तं न मृतस्येति ज्ञापनार्थं नास्ति तस्य समापनमित्युक्तम् । शुनस्कर्णस्तोमे तु समापना[नवचना]त् समापनम् । अन्यत्र न तादृशं वचनमस्ति । यदि पूर्वस्यामाहुतौ हुतायां यजमानो म्रियेत उत्तरामाहुतिं भस्मनि जुहुयादिति समाप्त्यभावं दर्शयति । कर्ता च फलार्थी मृतः; कः पुनरन्यः समापयितुमर्हति? शरीरमस्तीति चेत्, न शरीरार्थं फलम्, अचेतनत्वात्तस्य[२] । यश्च शरीरवान् नित्यः सर्वगतः स फलेन सम्बध्यते । स चेदं शरीरमुत्सृज्य प्रागुपचितकर्मानुरूपं[३] शरीरमुपादाय क्वापि गतः[४]; कोऽन्यः समापयिता?

१. L omits अनेक...न्यायः
२. A. तस्याश्च
३. A. कर्मानुकूलरूपं
४. A omits क्वापि गतः

अथवा योऽसौ समापनप्रकारः शास्त्रान्तरेष्वाम्नायते, तस्य प्राक्तनकर्मसमापनत्व-प्रतिषेधार्थमिदमुच्यते । मरणनिमित्तं प्रागुपात्तानां हविषां प्रतिपादनमात्रमेतदुच्यते, न कर्मसमापनं फलसंयोगमा[योगो वा । आ]रभ्य समापयतो हि फलम्, नैकदेशमनुतिष्ठते[तः] । एतेन न्यायेन पाकयज्ञेषु हविर्यज्ञेषु समापनाभावः सिद्धः । न्यायप्रदर्शनार्थं हीदं वचनम् ॥ ३ ॥

प्रेत.... र्वन्ति ॥ आहिता अग्नयो येन स आहिताग्निः; तं प्रेतमुत्क्रान्तप्राणं सम्यग् ज्ञात्वा अजस्राननुपरतदीप्तानग्नीन् कुर्वन्ति । आहिताग्निशब्दस्य यौगिकत्वाद्यजमाने पत्न्यां चाविशेषात् । द्वयोर्हि साधारणोऽग्निसम्बन्धः "क्षौमे वसानावग्निमादधीयाताम्" इति श्रूयते । अजस्रशब्दोऽनुपरमवचनः । गार्हपत्योऽजस्र एव आहवनीयान्वाहार्यवचनाभिप्रायमजस्रतावचनम् । बहुवचनमनुपपन्नं इति चेत्, सभ्यावसथ्याभिप्रायं भविष्यति । एकयोन्यभिप्रायवचनं नित्यधृतपक्षे नित्यमजस्रा एवाग्नयः गार्हपत्यादाहवनीयमुद्धरतीत्यग्निहोत्रप्रकरणे समाम्नानात्तदर्थमुद्धरणमन्त्रः । अस्ये तु तूष्णीमेव कर्मणे कर्मणेऽग्निः प्रणीयते; "अपवृत्ते कर्मणि लौकिकः सम्पद्यते" इति वचनम् । तत इह पैतृमेधिकाय कर्मणे उद्धरणं प्राप्तमेव तूष्णीं प्रतिपत्तिकर्मत्वादप्राप्तिमाशङ्कमानेन आचार्येणोच्यते । आहुतिसन्तापादपूर्वार्थतायां सिद्धायां उद्धरणस्य कर्तव्यता न्यायप्राप्ता कीर्त्यते । कुर्वन्तीति बहुवचननिर्देशो नियतकर्तृकत्वज्ञापनार्थः । इतरथा संस्कर्तुरेवोद्धरणं स्यात् । अन्वाहार्यपचनमपि यथाप्रकृति निष्पादयन्ति[१] । सभ्यावसथ्यपक्षे तावपि यथाप्रकृति निष्पादयन्ति । आधाने हि या यस्य योनिः सा अन्यत्रापि भवितुमर्हति । वैकल्पिकत्वादस्मदाचार्येण सभ्यावसथ्यौ क्वचिदपि न कीर्त्यते । ग्रहणपक्षे प्रतिपत्तिः कर्तव्यैव । कृतानां हि द्रव्याणामुपक्रमविशेषादन्यप्रयोजनसाधनायासमर्थानां येनकेनचित्प्रकारेण प्रतिपत्तिः कर्तव्यैव । नियमकारिणि शास्त्रे सति नियमस्यार्थवत्त्वाददृष्टार्थतानुमीयते ॥ ४ ॥

किं यथाप्रकृत्यग्नीनां विहारः, आहोस्वित् अस्ति कश्चिद्विशेष इति—

अत्रोच्यते ॥

१. A. समापनता च
२. A. अन्यत्र
३. L omits this word.
४. A. यति

विहारं दक्षिणतो विहृत्य ॥५॥ कुशानामेवमग्रता ॥६॥ तेष्वेनं गार्हपत्यस्य पश्चाद्दक्षिणाशिरसं निपात्यान्तरेण गार्हपत्याहवनीयावेवं गार्हपत्य आज्यं

विहा......हृत्य ॥ दक्षिणतो विहारं कृत्वा अजस्रानग्नीन् कुर्वन्ति, पैतृमेधिकं वा कर्म प्रतिपद्यते इति वाक्यशेषः। पूर्वकालतायां स्मर्यमाण उत्तरकालभाविपदार्थसत्तामवगमयति। अत्र अर्थप्रकरणवशादध्याहारः। गार्हपत्याद् दक्षिणाहवनीयमुद्धरंति, तदा आनुपूर्व्येणान्वाहार्यपचनः। एवं दक्षिणापवर्गो विहारो भवति। तत्र तु वचनं प्रसिद्धम्; न हि न्यायः तादृशो विद्यते ॥ ५ ॥

कुशा......ग्रता ॥ कुशानां दर्भाणामस्मिन् कर्मण्युपादीयमानानामेवमग्रता दक्षिणाग्रता भवति। ननु च—"दक्षिणान्ययानि पित्र्याणि" इत्येव सिद्धं दक्षिणाग्रत्वं सिद्ध्यति। न ह्येतत् पैतृकं कर्म। अग्नीनां यज्ञपात्राणां च कृतप्रयोजनानां प्रतिपत्त्यर्थमेतत्कर्म। कुतः प्राप्तिरिति? वचनादिति केचित्। वयं तु न्यायत इति वदामः। न केवलमेतत् प्रतिपत्तिकर्म, अर्थकर्मापीति वदामः। अष्टाचत्वारिंशत्सु संस्कारेषु गणितत्वादन्यसंस्कारकर्मवत् फलवदेतत् कर्म; फलवति च कर्मणि कृतप्रयोजनानि द्रव्याणि प्रतिपद्यन्ते। यमहोमादीनां तादर्थ्यं न श्रुत्यादिभिः प्रमाणैः परिच्छिद्यते। होमत्वाददृष्टार्थता शक्या वक्तुम्। प्रेतफलनिष्पत्तये च क्रियमाणं कर्म पैतृकमुच्यते। तस्मात् प्राप्तमेव दक्षिणाग्रत्वम्। न्यायप्रदर्शनार्थं चैतद्वचनम्। ततः प्राचीनावीतित्वमपि कर्तव्यम्। पितृकर्मता हि न्यायप्रसिद्धा ख्यापिता, न दक्षिणाग्रतामात्रस्य नियमः ॥ ६ ॥

तेष्वे......यर्चा ॥ तेषु कुशेषु दक्षिणाग्रेषु एनं प्रेतं दक्षिणाशिरसं गार्हपत्यस्य पश्चान्निपात्य निक्षिप्य शाययित्वा पुनरन्तरेण गार्हपत्याहवनीययोरेवं दक्षिणाग्रेषु कुशेषु दक्षिणाशिरसं शाययन्ति। द्वयोर्देशयोर्विकल्पमेके मन्यन्ते, अदृष्टार्थतापरिहाराय। न ह्येकस्मिन् देशे निपात्य तत्र किंचित् अकृत्वा पुनरन्यस्मिन्प्रदेशे निपातनात् अदृष्टमस्तीति। तदनुपपन्नम्। समानकर्तृकयोर्हि पूर्वकाले क्त्वा भवति, न वैकल्पिकयोः। शब्दप्रमाणका[2] हि वयम्। यच्छब्द आह, तदस्माकं प्रमाणम्। शब्दश्च समुच्चयमाह, न विकल्पम्; तस्माददृष्टार्थं पूर्वं शयनम्, अन्वारम्भार्थमुत्तरम्। गार्हपत्य आज्यं विलाप्य सम्यग्विलयनं कृत्वा पवित्राभ्यामुत्पूय स्रुचि

१. A[2]. अग्रतः

२. A. प्रमाणता

**विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वान्वारब्धे प्रेत आहवनीये जुहोति**

जुह्वां चतुर्गृहीतं स्रुवेण गृहीत्वा प्रेतमन्वारब्धं कृत्वा "परेयिवांसम्" इत्येतयर्चा आहवनीये जुहोति। "आज्यं विलाप्योत्पूय" इति गृह्यप्रोक्तः पात्रसंस्कार आज्यसंस्कारश्च लक्ष्यते। "आज्यसंस्कारः सर्वत्र" इति वचनादतत्प्रकृतिकेष्वपि प्राप्नोति। इह गार्हपत्यसंबन्धार्थमुच्यते। इतरथा यस्मिन्नग्नौ होमः तस्मिन्नेवाज्यसंस्कारः प्राप्नोति। विलाप्याधिश्रित्येत्यर्थः। अधिश्रयणं च विलापनार्थम्। न हि दृष्टे सत्य-दृष्टकल्पना न्याय्या। अधिश्रयणं तत्र कृत्वा उत्पवनमाहवनीये समीपे स्यादित्याशङ्कानिवृत्त्यर्थमुभयं गार्हपत्य एव कर्तव्यमित्युक्तम्। सत्यपि स्रुक्शब्दस्य सामान्य-वचनत्वे होमार्थत्वाज्जुहूरभिधीयते। "आहवनीयः सर्वाहुतीनां जुहूश्च पात्रम्" इति प्राप्ता जुहूश्चतुर्गृहीतसंबन्धार्थमनूद्यते। गार्हपत्यस्य प्रकृतत्वादाशङ्कानिवृत्त्यर्थमाहवनीयग्रहणम्। एकां प्रतीयादन्यत्रेति वचनात् "परेयिवांसम्" इत्येव सिद्धमेतयर्चेत्यनर्थकम्। तस्यैतत् प्रयोजनम्—एतयेति प्रकृतिवाचिना सर्वनामशब्देन निर्देशः तदादीनामृचां पितृमेधार्थतां ख्यापयति। "परेयिवांसम्" इत्यारभ्य दशाक्षरपर्यन्ता मन्त्राः पितृमेधार्था इति ज्ञाप्यते; न तत्र आसां ऋचामन्यत्प्रयोजनं श्रूयते। काश्चिदेवर्चोऽन्यत्र विनियुक्ताः। क्रमार्थत्वादाम्नायस्य विनियुक्तानामपि मन्त्राणां यथालिङ्गं विनियोगः कर्तव्यः। वैकल्पिकत्वज्ञापनार्थमाचार्येण प्रतिपदमनूक्ता। तैत्तिरीयाणां च पितृमेधे बह्व्यो ऋचः पठिताः। तद्वचनान्वीक्षणाल्लिङ्गविशेषसंयोगाच्च सर्वासामृचां विनियोगो न्याय्यः। अविनियुक्तानां वाचस्तोमे आश्विने वाभ्युदये विनियोगो भविष्यतीति चेत्, नैतन्न्याय्यम्; सङ्ख्याविवृद्धिमात्रं स्तोमातिशंसनार्थं वाचस्तोमे कीर्त्यते, न देवतान्यत्वम्[2]। तस्मात् तत्र तत्र तद्दैवत्याभिः तच्छन्दस्याभिः स्तोमातिशंसनं कर्तव्यम्। अभ्यावृत्तिभयात् प्रकृतयोश्छन्दोदेवतयोः परित्याग इति चेत्, सर्वथा वयं अभ्यावृत्तेर्न मन्यामहे। प्राकृतपरित्यागेऽप्यभ्यावृत्तिमन्तरेण स्तोमो न पूर्यते। स्तोमातिशंसनं च बाह्यो गुणः; शस्त्राणां देवता

१. A. गृहीश्चतु
२. A. देवताद्यन्यत्वं
३. A omits अपि



K—22

प्रत्यासन्ना। तस्या हि स्तुतिः समेता[मवेता]। न च विप्रकृष्टगुणानुजिघृक्षया सन्निकृष्टगुणपरित्यागो न्याय्यः। तस्मादपि प्रकृतयोश्छन्दोदेवतयोरपरित्यागः। अभ्यावृत्त्यैव स्तोमातिशंसनं कर्तव्यम्। आश्विने चाभ्यावृत्तिक्रमो ब्राह्मणे कीर्तितः। "अथ यद्याग्नेयं क्रतुं पुरा कालात् समतीयात्" इत्यारभ्य तत्र च मण्डूकसूक्तादीनामपि विनियोगः। पाठ एषामनर्थक इति चेत्, पारायणार्थो भविष्यति। पारायणमपि निमित्ते चोदितम् "बहून्यपतनीयानि कृत्वा त्रिभिरनश्नन् पारायणैः कृतप्रायश्चित्तो भविष्यति" इत्येवमादिवचनात्। स्मार्तं तद्वचनमिति चेत्, स्मार्तमपि अगृह्यमाणकारणं श्रुत्यविरुद्धं ग्राह्यमेव। शौचाचमनवच्चाधिकारिकाणि तादृशानि वचनानि। न ह्यचरितप्रायश्चित्तस्य वैदिकेषु कर्मस्वधिकारः। तस्मादनन्यार्थत्वात् पितृमेधे यथालिङ्गं मन्त्रविनियोगः कर्तव्यः। इहापि संहिताप्रयोजनमिति चेत्, लिङ्गविशेष उपरुध्येत; प्रकरणं च बाध्येत; "सर्वासां चाज्याहुतीनाम्" इति परिभाषितत्वात् पाकयज्ञिको होमः प्राप्नोति चेत्, "चत्वारः पाकयज्ञाः" इति प्रकृतत्वात् पाकयज्ञेषु स होमकल्पः। त्रेताग्निसंबन्धे च कर्मणि पाकयज्ञशब्दो न प्रवर्तते। "महान्तं कोशमिति त्रिः पर्युक्षति सर्वत्र" इति सत्यपि सर्वग्रहणे पाकयज्ञप्रकरणात् तद्विषयः सर्वशब्दः यथा सर्वं घृतं पीतमिति। यदि च एवंजातीयकेऽप्यभीष्टमभविष्यत् सूत्र एव पर्यभाषिष्यत, न गृह्ये। तस्मात् पर्युक्षणं न कर्तव्यम्। स्रुक्स्रुवसंस्कारो गृह्यप्रोक्तः कर्तव्यः। "आज्यसंस्कारः सर्वत्र" इत्येव सर्वविषयतायामाज्यसंस्कारस्य सिद्धायां नासंस्कृतेन जुहुयादिति वचनात् पात्रावेक्षमसंस्कृतेन पात्रेण होमो न कर्तव्य इति। तत्रापि सर्वशब्दः प्रकृतपाकयज्ञविषय इति चेत्, न; आनर्थक्यप्रसङ्गात्; तत्प्रकृतित्वादेव पाकयज्ञेष्वाज्यसंस्कारः पात्रसंस्कारश्च प्राप्तः, नातत्प्रकृतिकेषु। समिद्धोमादिषु प्राप्तिरस्ति, संस्कृतेनाज्येन पात्रेण वा प्रयोजना-

१. L. असुरा
२. A. मन्त्रलिङ्ग
३. A. यज्ञधर्मेण
४. L. त्रेतानन्ताग्नि
५. L. सत्यघमर्षणसर्वं
६. A. स्फीतं
७. A omits this word.
८. A. के स्विष्टं
९. A. भाष्यत

“परेयिवांसम्” इत्येतयर्चा ॥७॥ एवं गार्हपत्ये ॥८॥ एवमन्वाहार्यपचने ॥९॥

भावाद्वचनप्रामाण्यात् । संस्कृतं पात्रं समिद्धोमादिषु क्रियताम् इति चेत्, संस्कार एवासौ न स्यात्; संस्कारो हि नाम सम्भवति, यः संस्कारः संस्कर्तव्यस्य प्रयोजनान्तरे सामर्थ्यं जनयति । तस्मादेवमर्थमेव तद्वचनम् । तस्मात् कर्तव्य एव पात्रसंस्कारः आज्यसंस्कारश्च; तत्रोक्तत्वाद् गार्हपत्य एव पात्रसंस्कारः कर्तव्यः । एकाग्निसंबद्धौ ह्युभौ प्रकृतौ श्रूयेते । तथा च सहसंस्कारप्रत्ययो विस्पष्टः[1] शाखान्तरे[2] । शाखान्तरीयाश्च विशेषा असति विरोधे ग्रहीतव्याः ॥ ७ ॥

एवं गार्हपत्ये ॥ एवं गार्हपत्ये होमः कर्तव्यः ॥ ८ ॥

एव......चने ॥ अन्वाहार्यपचनेऽप्येवमेव होमः कर्तव्यः । अग्निसंस्कारार्थत्वात् सभ्यावसथ्ययोरपि कर्तव्य इति केचित् । तदनुपपन्नम्[3] । न ह्यग्निसंस्कारार्थता होमस्य श्रुत्यादीनां षण्णां विनियोगकारणानामन्यतमेन[4] परिच्छिद्यते । द्रव्यदेवतासंबन्धस्याप्युपपत्तेरदृष्टार्थता न्याय्या । पारार्थ्यं चाहवनीयादीनां सप्तमीसंयोगादवगम्यते । द्वितीया हि संस्कारकर्मणि प्राप्नोति । “विष्णवे शिपिविष्टाय प्रातर्दोहिते पयसि चरुम्” इत्यपि सप्तमीसंयोगे प्राधान्यं पयसो दृष्टम् इति चेत्, तन्नोपपद्यते; तत्र हि प्रमाणान्तरेण पयसः प्रदेयत्वमवगतम् । इहाभ्युदये निमित्ते प्रकृत्या[कृताया] देवताया[5] अपनयः । देवतान्तरसंबन्धश्च पयसः श्रूयते; नापूर्वं पय उपादीयते । ‘प्रावारे सुमनसो वास्यन्तां गृहे वा गावो वास्यन्ताम्’ इति लोकेऽर्थलक्षणत्वाद्व्यवहारस्य गृहप्रावारार्थता[रार्था] क्रिया परिच्छिद्यते । इह पुनर्न तादृशं कारणमस्ति, येन कारणेनाहवनीयादीनां प्राधान्यमनुमीमहे । तस्माददृष्टार्थत्वाद् यावदुक्तमेव कर्तव्यम् । सभ्यावसथ्ययोः प्राप्तिर्नास्ति ॥ ९ ॥

१. A. अतिस्पष्टः

२. L omits this word.

३. A. तदुपपन्नं

४. A. णामन्यतमेन

५. L omits देवताया अपनयः

६. L. यच्चाव-

अन्वाहार्यपचने चरुं जीवतण्डुलं श्रपयन्ति ॥१०॥ गार्हपत्ये मैत्रावरुणीमामिक्षाम् ॥११॥ अथैनं दक्षिणतः परिश्रिते निपात्य संहार्य लोमनखानि

अन्वा......यन्ति ॥ जीवतण्डुला अविकृतरूपा म्रदिमानमागता ईषत्पक्का यस्य चरोः स जीवतण्डुलश्चरुः। तमन्वाहार्यपचने परिकर्मिणः श्रपयन्ति ॥ १० ॥

गार्ह......मिक्षाम् ॥ मैत्रावरुणीमामिक्षां गार्हपत्ये श्रपयन्ति इति वाक्यशेषः। तप्ते पयसि दध्न्यानीयमाने आमिक्षा निष्पद्यते, वाजिनं च । प्रयोजनाभावाद् वाजिनमुत्सृज्यते, आमिक्षोपादीयते। मित्रावरुणौ यस्या देवता सेयं मैत्रावरुणी आमिक्षा । देवतासंबन्धाद्यागः कर्तव्य इति केचित् । न हि मित्रावरुणाभ्यामामिक्षाया अन्यो हि संबन्धः । प्रदानात् सम्भवति, प्रदीयमाना च सकर्मिका भवितुमर्हति इति तत्र अग्न्यन्वाधानादिगोमतीपर्यन्तं तत्कर्तव्यम्, हविस्सामान्यबलीयस्त्वाच्च वृधन्वन्तावाज्यभागौ भवतः। यागे कृते शेषकार्येषु कृतेषु यत् परिशिष्टं तत् पाण्योर्निधातव्यमिति, तदनुपपन्नम्। देवतासंयोगाद्यागः कर्तव्य इत्यानुमानिकविज्ञानं पाणिना संयोग आमिक्षायाः प्रत्यक्षः नैकदेशसंयोगः । एकदेशसंयोगे चामिक्षाशब्दो गौणः स्यात् । मुख्यार्थसम्भवे च गौणो न ग्रहीतव्यः। तस्मादामिक्षा न यागार्था; देवतासंयोगस्त्वदृष्टाय; मैत्रावरुणीयमामिक्षेति संश्चिन्तनाददृष्टं भवति। विधानार्थैव वा, यथा "तासां बार्हस्पत्यं मध्य उपदधाति" इति सत्यपि देवतासंयोगे उपधानार्थता चरोर्याज्ञिकैरभ्युपगता, तद्वदेतद् द्रष्टव्यम् ॥ ११ ॥

अथै......इति ॥ प्रेतं विहारस्य दक्षिणतः परिश्रिते देशे निधाय लोमनखानि कुशलेन ब्राह्मणेन संहारेत्[रयेत्] वापयेत्। शूद्रसंस्पर्शो हि प्रेतस्य प्रतिषिद्धम् "अस्वर्ग्या ह्याहुतिः सा स्यात् शूद्रसंस्पर्शदूषिता" इति। लोमनखानीति कृतपद्वा[कृतद्वन्द्वा]नामेकशेषः; ततो बहुवचनं प्रयुक्तम्। बहूनि स्थालीपाठनानि यथा उभयं हि दृश्यते इति यकाणेरेणाभ्युपगतम्[?]। प्रेतस्येत्यनुच्यमाने लोमनखावापनं संस्कर्तुरित्याशङ्क्येत; तद्व्युदासार्थं प्रेतस्य इत्युच्यते। आप्लाव्य स्नापयित्वा गन्धपुष्पाभर-

१. A[1] and T omit this word.
२. T. श्रपयीत
३. L. प्रदानं
४. A. सधर्मिका
५. L omits इति
६. L. धानाधिमिन्नत्रं कर्तव्यम्
७. L. सन्ति नादृष्टं
८. L omits लोम...स्येत्यनुच्य
९. A omits संस्क...ङ्क्येत

प्रेतस्याप्लाव्यालङ्कृत्याहतेन वाससा परिदधीत "इदं त्वा वस्त्रं प्रथमं न आगन्" इति ॥१२॥ अथेतरदपैति "अपैतदूहयदिहाविभः पुरा" इति ॥१३॥ तदस्य पुत्रः परिधायाजरसाद्वसीत "इष्टापूर्तमनुसंपश्य दक्षिणां यथा ते दत्तं बहुधा विबन्धुषु" इति ॥१४ ॥

अथ द्वितीयः खण्डः

अथोल्मुकं गार्हपत्य आदीप्याग्रतो हरन्ति ॥१॥ अथाजम् ॥२॥ अथ

णादिभिः यथोपपादमलङ्कृत्य अहतेनानुपयुक्तेन प्रक्षालितोपपातेन वाससा परिदधीत इति परिधापयेत् "इदं त्वा वस्त्रं प्रथमं न आगन्" इत्यनेन मन्त्रेण परिधापयेत् इति प्राप्ते तस्याचेतनत्वात् स्वातन्त्र्याविवाक्षा स्यात् । अप्येतु [अत्र तु] विवक्षाक्षीया [क्षापेक्षया] परिदधेति[दधीतेति] प्रयुक्तः ॥ १२ ॥

अथे......रेति ॥ इतरद्वसनं प्रेसारितमनेन मन्त्रेणापगमयति । अपगमयतीति प्राप्ते णिलोपः छान्दसः । छन्दोवत्सूत्राणि भवन्तीति । छन्दोऽर्थत्वात् "बहुलं छन्दसि" इति सर्वे विधयो भवन्ति, नातो णिजुत्पद्यते ॥ १३ ॥

तद......ष्विति ॥ तद्वसनमपनीतस्य प्रेतस्य पुत्रः परिधाय वक्ष्यमाणेन मन्त्रेण ततः पैतृमेधिकं कर्म कुर्यात् । समाप्ते पैतृमेधिके कर्मणि आजरसाद्वसीत । आच्छादनायोग्यं यदा भवति, तदा तदुत्सृज्यते । ततः प्रागाच्छादयेत् । जराशब्देन तुल्यार्थो जरसशब्दः छन्दोविषयो विद्यत इति आचार्यप्रयोगान्मन्यामहे ॥ १४ ॥

अथ द्वितीयः खण्डः

अथ......रन्ति ॥ उल्मुकं गार्हपत्य आदीप्य प्रज्वाल्य सर्वेषां सम्भाराणामग्रतः परिकर्मिणो हरन्ति । अग्न्यवयवत्वादुल्मुकस्य यथा अग्निभिर्व्यवायो न भवति, तथा हरन्ति ॥ १ ॥

अथाजम् ॥ उल्मुकस्य पश्चात् अजमप्यवयन्तं परिकर्मिणो हरन्ति । अनुपलक्षणार्थत्वादुपादेयत्वेन चोदितत्वाल्लिङ्गवचने विवक्षिते । त एकं पुमांसं हरन्ति ॥

१. A[1] and A[2]. उन्मुकं
२. A[1]. उद्दीप्य
३. A. प्रयुक्तं
४. A omits इदं त्वा...प्रयुक्तः
५. L. प्रतारितं
६. L omits प्राप्ते

राजगवीम् ॥३॥ अथाग्नीन् ॥४॥ अथ यज्ञपात्राणि ॥५॥ अथैनमानीयमान-मनुमन्त्रयते "पूषा त्वेतश्च्यावयतु" इत्येतया ॥६॥ द्वितीयया द्वितीयम् ॥७॥ तृतीयया तृतीयम् ॥८॥ तुरीयमध्वनो गत्वाऽऽत्मैनं निपात्यास्य नेदिष्ठाः

अथ राजगवीम् ॥ राजशब्देन सामानाधिकरण्यलक्षणः समासः । राज-शब्दश्च लक्षणया विशिष्टतामभिदधाति । बलदर्पादिसम्पन्नां गामनुस्तरणीमव्य-यन्तः । ततः पश्चाद्धरन्ति ॥ ३ ॥

अथाग्नीन् ॥ ततः पश्चादग्नीन् गार्हपत्यादीनव्यावान्तः परिकर्मिणोऽजस्रान् हरन्ति । नात्रारणिसमारोपणम्, अन्यत्र हि गमने समारोप्य गमनमिहाजस्रानेव हरन्ति ॥ ४ ॥

अथ......त्राणि ॥ यज्ञार्थानि पात्राणि द्विप्रकाराणि, कानिचिद्धार्याणि कानिचित्तस्मिन्नेव कर्मणि प्रतिपादितानि । सोमपात्राण्यवभृथे प्रतिपद्यन्ते, उपवेषादीनि च दर्शपूर्णमासयोः तत्रैव प्रतिपद्यन्ते । येषां पात्रोपचये विनियोगो दृश्यते, तानि धार्याणीति मीमांसकानां राद्धान्तः । तस्मात्तानि धार्याणि । यज्ञ-पात्राणि स्रुवादीनि तानि परिकर्मिणोऽव्यवयन्तो हरन्ति ॥ ५ ॥

अथै......तया ॥ अथ एनं प्रेतमानीयमानमन्यैः ब्राह्मणैः संस्कर्तानयर्चानु-मन्त्रयते । संस्कर्तुरन्ये प्रेतस्य वोढार इत्यस्यैव वचनस्य सामर्थ्यात् सिद्धम् । "न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत्" इति वचनात् द्विजातय एव वोढार इति सिद्धम् ॥ ६ ॥

द्विति......तीयम् ॥ द्वितीयमादीयमानं द्वितीययर्चा अनुमन्त्रयते—"आयुर्वि-श्वायुः" इत्येतया । ग्रन्थलाघवार्थमिह वचनम् । तुरीयमध्वनो गत्वा निपातने कृते पुनरुदीयमानं द्वितीययर्चा अनुमन्त्रयत इत्यर्थः ॥ ७ ॥

तृती......तीयम् ॥ तृतीययर्चा "पूषेमा आशाः" इत्येतया तृतीयमादीयमानं तथैवानुमन्त्रयते ॥ ८ ॥

१. A[1] and T. दीयमानं
२. T adds तुरीयया
३. L. स्रुचादीनि
४. L. निपातेन

कनिष्ठप्रथमाः सव्यान्केशानुद्ग्रथ्य सव्यानूरूनाघ्नानाः सिग्भिरभिधून्वन्तः त्रिरपसलं परीत्य तद्विपर्यासमेवमेव प्रदक्षिणम् ॥९॥ दक्षिणतस्त्रीन् लोष्टानवरुज्य दक्षिणतो निधाय तेषु तूष्णीं चरोर्मेक्षणेन जुहोति । एवं द्वितीयम् ॥

तुरी......क्षणम् ॥ यावन्तमध्वानं गन्तव्यमन्यत्र श्मशानयोग्या पुण्या भूमिः समुपक्लृप्ता, तत्प्राप्त्यर्थस्याध्वनस्तुरीयमंशं गत्वा तत्रैनं निपात्यास्य प्रेतस्य नेदिष्ठाः प्रत्यासन्नाः सम्बन्धिनो येषामाशौचं प्रेतनिमित्तं भवति, कनिष्ठः प्रथमो येषामग्रतः त इमे कनिष्ठप्रथमा वोढारश्चान्ये च उपनीता अनुपनीताश्च स्त्रियः पुरुषाश्च । न हि तत्र लिङ्गं विवक्षितम्, लक्षणत्वेन श्रूयमाणत्वात् । पत्न्याश्च प्रयोजनमुत्तरत्र विद्यते । तस्मात् प्रत्यासन्नस्त्रियश्च पुरुषैस्सहैतत्कर्म कुर्वन्ति । सव्यान् केशानुद्ग्रथ्य उच्छ्रितं ग्रथितैः कैशैः कृत्वा सव्यानूरूनाघ्नानास्ताडयन्तः तस्याङ्गकर्मान्वेति । वक्तव्यमिति वचनात् सत्यपि सकर्मकत्वे "आङो यमहन" इत्यात्मनेपदं भवति । सिग्भिर्वसनैरात्मीयैरवधून्वन्तः कम्पयन्तः प्रेतस्पर्शिनो वायूनुपजनयन्तः अपसलैः अपसव्यं त्रिः प्रेतं परीत्य परिगम्य¹ "लक्षणहेत्वोः क्रियायाः" इति शतृशानचोः प्रयुक्तत्वात् सातत्येन यथोक्तमनुतिष्ठन्तः पर्यन्ति । न सकृत् कृत्वा कृतः शास्त्रार्थ इत्युदासते । तद्विपर्यासं सर्वान् प्रयोगाननुतिष्ठन्ते । एवमेव प्रदक्षिणं त्रिः परियन्ति । सर्वे ज्येष्ठप्रथमा दक्षिणानुद्ग्रथ्य दक्षिणानूरूनाघ्नानाः सिग्भिरभिधून्वन्तः त्रिः प्रदक्षिणं परियन्तीत्यर्थः ॥ ९ ॥

दक्षि......यम् ॥ प्रेतस्य दक्षिणतो दक्षिणस्यां दिशि त्रिलोष्टानवरुज्य सम्पीड्य निदधाति । तेषु लोष्टेषु चरोर्मेक्षणेनोपहत्य तूष्णीं जुहुयात् । देवतास्मरणस्य कर्तव्यतामवगमयति । "प्रजापतिं मनसा ध्यायन् तूष्णींहोमेषु सर्वत्र" इति शौनकेन परिभाषितम् । अस्माकं चाग्निहोत्रयोरेकाहयोरग्निहोत्रदेवतानां पशुषु संकीर्त्यमानेषु प्राजापत्यान् पशून् श्रूयते[?] । ततस्तूष्णींहोमेषु प्रजापतिर्देवता इति गम्यते । न च देवतामन्तरेण यागः सम्भवति । द्रव्यदेवताक्रियात्मको हि यागः । तत्रावश्यम्भाविन्यां देवतायां सर्वदेवकारणत्वात् प्रजापतिर्देवतेत्युच्यते । तमादीयमानम् "आयुर्विश्वायुः इत्यनुमन्त्रयते" इत्युक्तमेव पुनरपि तावन्तमध्वानं गत्वा तत्रैनं निपात्य पूर्ववत् सर्वं होमान्तं कुर्वन्ति ॥ १० ॥

१. A[1] and T. रुद्ध्य
२. A adds प्रेतं
३. A. परिगत्य
४. A. ग्निदेवानां
५. A. पत्यावशात्
६. A. तमानीय

१०॥ एवं तृतीयम् ॥११॥ अथात्र चरुपात्रं भिनत्ति यथोदकं न तिष्ठेत्॥१२॥ आदहने तूष्णीं निधायं दक्षिणस्यां दिशि दक्षिणाप्रवणे दक्षिणाप्राक्प्रवणेन वा "अपेत वीत" इति पलाशशाखया त्रिः परिलिख्यं वास्तौ हिरण्यशकलं निधाय 'देहि यमराज वास्त्वस्मा इत्थंनामधेयाय' इति गृहीत्वा वास्तु प्राग् दक्षिणां चितिं चित्वा ॥१३ ॥

एवं तृतीयम् ॥ पुनरेनमादीयमानम् "पूषेमा आशा" इत्यनुमन्त्रयते, यः संस्करोति ॥ ११ ॥

अथ......तिष्ठेत् ॥ अथ तृतीये होमे निवृत्ते चरुपात्रं चरुस्थालीं भिनत्ति। यथा भिन्नेषु कपालेषूदकं न तिष्ठेत्, तथा सूक्ष्मकपालान् भिनत्ति ॥ १२ ॥

आद......चित्वा ॥ आदहत्यस्मिन् प्रेतं इत्यादहनम्। दहनयोग्या पुराणेतिहास-धर्मशास्त्रप्रामाण्यात् गङ्गादिषु पुण्यदेशेषु प्रयत्नेन सा भूमिः सम्पादनीया। तत्रैनं तूष्णीं निधायेति शाखान्तरीयमन्त्रप्रतिषेधार्थमुच्यते। न ह्यस्माकं मन्त्रप्राप्तिरस्ति। यथा यजमानस्य साम्न आत्मगुरुसन्निधावुपांशुत्वं प्रतिषेद्धुमुच्चैष्ट्वमुच्यते, मन्त्रलिङ्गाद्वा यजमानं संगमयितुम्—"सङ्गच्छस्व पितृभिः" इति। अनयोः ऋचोराशङ्कमानः प्राप्तिं तूष्णीमित्याह। निहितस्य प्रेतस्य दक्षिणस्यां दिशि दक्षिणाप्रवणे भूमिं परिकल्प्य "अपेत वीत" इति पलाशशाखया दहनभूमिं त्रिः परिलिख्य समन्ततो लिखित्वा वास्तौ वास्तुनि मध्ये। अत्र प्रेतस्य वा संशयनं मन्यते। लिङ्गव्यत्ययः छान्दसः। तत्र हिरण्यशकलं निदधाति, आचार्यैः परिभाषितत्वात्। हिरण्यचोदनायां जातरूपमेव भवति, न रजतम्। 'देहि यमराज वास्त्वस्मा इत्थंनामधेयाय' इति गृहीत्वा वास्तु स्वीकृत्य। नामधेयनिर्देशः चतुर्थ्या कर्तव्य इति केचित्। तथा इत्थंनामधेयाय इति निर्दिशन्ति। ततो देवदत्तनामधेयाय इति यज्ञदत्तनामधेयाय इति प्रेतस्य नाम निर्देष्टव्यम्। मन्त्रवचनपूर्वकर्मस्मरणमात्रं वास्तुग्रहणम्। न च प्रयोगविशेषो विद्यते, प्राग्दक्षिणाचितां काष्ठप्रदेशे चिनोति। यथा प्राग्दक्षिणाशिराः प्रेतः तत्र शेते तथा सम्पादयेत् ॥ १३ ॥

१. A[1] and T add गत्वा दहनं
२. A[1] and T. परिमृज्य
३. L. चित्रं दहति
४. A. मध्ये यस्य त
५. L omits निर्देशः and adds it after the next word.

आहिताग्निसंस्कार:



## अथ तृतीयः खण्डः

पश्चान्निधाय गार्हपत्यं दक्षिणतो दक्षिणाग्निं पुरस्तादाहवनीयम् ॥१॥ पश्चाद्दक्षिणतो वा गामनुस्तरणीम् ॥२॥ जीवन्त्या वृक्कौ पृष्ठत उद्धृत्य संज्ञप्तायां वा दक्षिणाग्नौ कोष्णौ कृत्वा "अति द्रव" इत्यृग्भ्याम् पाण्योराधाय ॥३॥ आमिक्षां च ॥४॥ "अग्नेर्वर्म" इति वपया मुखं प्रच्छाद्यान्तरेण गार्हपत्याहवनीयौ

## अथ तृतीयः खण्डः

पश्चान्निधाय......हवनीयम् ॥ "विहारं दक्षिणतो विहृत्य" इति पूर्वमन्येन प्रकारेण विहृतत्वाद्यथाप्रकृतिभावार्थमुच्यते ॥ १ ॥

पश्चा......णीम् ॥ तस्य काष्ठसञ्चयस्य पश्चाद्दक्षिणतो वा गामनुस्तरणीं राजगवीमवस्थाप्य । स्तृणोतेः हिंसार्थस्यैतद्रूपम् । अनु हिंसितव्या अनुस्तरणी ॥ २ ॥

जीवन्त्या......धाय ॥ तस्या जीवन्त्याः संज्ञप्ताया वा वृक्कौ[क्कौ] पृष्ठत उपायेन उद्धृत्य तौ दक्षिणाग्नौ कवोष्णौ ईषदुष्णौ सन्तपनेन कृत्वा "अति द्रव" इत्यृग्भ्यां पाण्योराधाय दक्षिणं दक्षिणे पाणौ सव्यं सव्ये पाणौ । "अति द्रव" इति दक्षिणे पाणौ "यौ ते श्वानौ" इति सव्ये ॥ ३ ॥

आमिक्षां च ॥ ताभ्यामेव मन्त्राभ्यामामिक्षां पाण्योर्निदधाति । न ह्यन्यत् प्रयोजनमामिक्षायाः श्रूयते । देवतासंयोगोऽप्यदृष्टायेत्युक्तम् ॥ ४ ॥

अग्नेः......पात्य ॥ ततस्तयैवानुस्तरण्या वपामुद्धृत्य तया प्रेतस्य मुखम् "अग्नेर्वर्म" इत्यनया प्रच्छाद्यान्तरेण गार्हपत्याहवनीययोरुत्तरत एनं हृत्वा चितेः काष्ठसञ्चये उत्तानं प्राग्दक्षिणाशिरसं निपातयेत् । एवं काष्ठचितेस्तन्मुखता दृष्टार्था भवति । इतरथा अदृष्टं कल्पयितव्यं स्यात् ॥ ५ ॥

१. T. Space is left out for writing गाम...वृक्कौ
२. A². वृक्यो L. वृको
३. T. सा वा
४. T. कवोष्णौ
५. T. Space is left out for writing गार्ह...पत्नी
६. A omits this sūtra.
७. A. बाण्यै
८. A. ह्यन्यप्र
९. L. प्रेतस्य तया
१०. L. एव ता काष्ठ



K—23

हृत्वोत्तानं चिते निपात्य ॥५॥ उत्तरतः पत्नीमुपसंवेश्य "उदीर्ष्व नारि" इत्युत्थाप्य प्राणायतनेषु हिरण्यशकलं निधाय घृतेन वाभिघार्य ॥६॥ पात्राणि युनक्ति ॥७॥ दक्षिणे पाणौ जुहूम् ॥८॥ उपभृतं सव्ये ॥९॥

उत्तरतः......[घार्य] ॥ प्रेतस्योत्तरत्व[रतः] पत्नीमुपसंवेश्य समीपे शाययित्वा ताम् "उदीर्ष्व नारि" इत्यनया उत्थाप्य प्राणानां चक्षुरादीनां आयतनानि । प्राणशब्दः चक्षुरादिषु लक्षणाया वर्तते छत्रिणो गच्छन्ति, ध्वजिनो गच्छन्ति इति यथा छत्रिणो ध्वजिनश्च तत्सहचरिता गृह्यन्ते, तद्वत्—प्राणायतनयोः नासापुटयोरिन्द्रियायतनानां चक्षुरादीनां ग्रहणम् । "सप्तशीर्षण्याः प्राणा द्वाववाञ्चौ प्राणानां नाभिद्दशं[दशमी] इति दश प्राणायतनानि प्राणा इत्येवमाचक्षते" इति । छान्दोग्योपनिषदि यान्न[लक्षणया]प्राणशब्दः चक्षुरादित्वगिन्द्रियाना[यान्तेषु] प्रतिपादितम् । अस्माकं चोपनिषदि "प्राणा यथायतनं विप्रतिष्ठन्ते" इति प्राणशब्दवाच्यत्वमिन्द्रियाणामुक्तम् । निःश्रेयसा पतेन[दानेन] च प्राणस्य महाभाग्यमभिहितम् । तस्माद्द्वयोर्नासिकापुटयोरक्ष्णोः कर्णयोरास्ये पायौ शिश्न उपस्थे नाभ्यां च दश हिरण्यशकलान् निदधाति । घृतेन वा तान्यायतनान्यभिघार्य । नायं तुल्यो विकल्पः । गुरुलघुकल्पयोस्तुल्यतायां गुरुकल्पविधानानर्थक्यप्रसङ्ग उक्तः । तस्मात् हिरण्यशल्काभावे घृतेनाभिघारणम् ॥

पा......क्ति ॥ ततो यज्ञपात्राणि युनक्ति । दक्षिणाग्राणि प्रायेण सम्पादयन्ति, उपरिबिलानि च सादयन्ति, पूरणस्यान्यथानुपपत्तेः ॥ ७ ॥

दक्षि...जुहूम् ॥ दक्षिणे बाहौ जुहूं निदधाति । [उप]लक्षणत्वेन जुह्वाः श्रवणात् एकवचनमविवक्षितम् । ततो वरुणप्रघासपात्राण्यपि तेष्वेव प्रदेशेषु निदधाति ।

१. T. चाभि
All except L. पाणौ
२. A omits this sūtra.
L omits the position within brackets.
३. L omits प्रेतस्य...चक्षुरादीनामा
४. L. प्राणायतनानि
५. A omits इति
६. L omits this word.
७. A omits ञ्चौ प्राणानां...अस्माकं
८. L omits च
९. A. विकल्प
१०. L omits ततो यज्ञ
११. A. ग्रेण
१२. L omits च

ध्रुवामुरसि ॥१०॥ अग्निहोत्रहवणीं कण्ठे ॥११॥ स्रुवौ नासिकयोः ॥१२॥ प्राशित्रहरणं दक्षिणे श्रोत्रे ॥१३॥ प्रणीताप्रणयनं सव्ये ॥१४॥ शिरसि

यदि वसन्ते वसन्ते सोमयागोऽनेन कृतः, ततः प्रचरणीमपि तत्र निदधाति। तथा दक्षिणे बाहौ तिस्रो जुह्वो भवन्ति ॥ ८ ॥

उप......सव्ये ॥ सव्ये पाणौ उपभृतं निदधाति। इहापि[1] वारुणप्रघासिक्या पृषदाज्यग्राहिण्या सह तिस्र उपभृतो भवन्ति ॥ ९ ॥

ध्रुवामुरसि ॥ उरसि ध्रुवां निदधाति। चातुर्मास्ययाजिनो द्वे ॥ १० ॥

अग्निहोत्रहवणीं कण्ठे ॥ अग्निहोत्रहवणीं कण्ठे निदधाति। प्रोक्षणीधानं तदाकारं तत्कार्यापन्नं वारुणप्रघासिकमग्निहोत्रहवण्या सह निदधाति। यद्यपि अग्निहोत्रं तया न हूयते तथाप्यत्र[3] विनियोगदर्शनात् कार्यापत्तेः तत्स्थाने विनियोगो न्याय्यः ॥ ११ ॥

स्रुवौ नासिकयोः ॥ ऐष्टिकमाग्निहोत्रिकं च द्वौ स्रुवौ नासिकयोर्निदधाति। ऐष्टिकेन सह वारुणप्रघासिकं निधातव्यम्। तुल्यकार्यत्वादयं[4] दक्षिणेऽयं सव्य इति नियमो नास्ति, विशेषानवगमाद्द्विवचनाभावाच्च ॥ १२ ॥

प्राशि......श्रोत्रे ॥ दक्षिणे श्रोत्रे प्राशित्रहरणं निदधाति ॥ १३ ॥

प्रणी... सव्ये ॥ प्रणीताप्रणयनं[5] सव्ये श्रोत्रे निदधाति ॥ १४ ॥

शिर......लानि ॥ कपालानि दार्शपौर्णमासिकानि चातुर्मास्यार्थानि च शिरसि निदधाति ॥ १५ ॥

१. A omits इहापि
२. L. होत्रनयो
३. A. तथान्यत्र
४. L. त्वादङ्गं
५. L. प्रणयने

कपालानि ॥१५॥ दत्सु ग्राव्णः ॥१६॥ उदरे समवत्तधानीम् ॥१७॥ पार्श्वयोः पात्र्यौ ॥१८॥ स्फ्यं दक्षिणे पार्श्वे ॥१९॥ सव्ये कृष्णाजिनम् ॥२०॥ उपस्थेऽरणी ॥२१॥ ऊर्वोरष्ठीवतोश्चोलूखलमुसले ॥२२॥

दत्सु ग्राव्णः ॥ दत्सु दन्तेषु ग्राव्णः दृषदुपले वृषारवं चेति केचित्। सोमेन ब्रह्मवर्चसकामोऽग्निहोत्रं जुहुयात् इति केचित् समामनन्ति। तत्र अभिषवर्थं एको ग्रावा विद्यते। तत्र दृषदुपलयोश्च निर्देश इति केचित्। "ग्राव्णो वायवैस्य प्लावने" इति सूत्रं बोधायनस्य प्रक्षाल्याहरेयुरिति। एकस्मिन्पक्षे वसन्ते वसन्ते सोमेन यक्ष्यमाणस्य सौमिकाः पञ्चग्रावाणो धार्यन्ते। तेषामयं निर्देश इत्युपपन्नम्। दृषदुपलयोर्वृषारवस्य च अण्डयोः शिश्ने च विनियोगमन्ये समामनन्ति। तदस्माभिरप्यविरोधाद्ग्राह्यम्॥ १६॥

उ......धानीम् ॥ समवत्तानि हवींषि धीयन्ते यस्यां सा समवत्तधानी इडापात्रमुच्यते; तत्र हि समवत्तानि हवींषि धीयन्ते॥ १७॥

पार्श्वयोः पात्र्यौ ॥ दारुपात्रीं पिष्टोद्वपनीयं च द्वयोः पार्श्वयोर्निदधाति। इमां दक्षिण इमां सव्य इति नियमो नास्ति, नियमकारिणः शास्त्रस्याभावात्॥ १८॥

स्फयं......पार्श्वे ॥ स्फ्यमपि पात्र्या सह दक्षिणे पार्श्वे निदधाति॥ १९॥

सव्ये......जिनम् ॥ सव्ये पार्श्वे पात्र्या सह कृष्णाजिनं निदधाति॥ २०॥

उपस्थेऽरणी ॥ उपस्थे द्वे अरणी निदधाति॥ २१॥

ऊर्वो......सले ॥ ऊर्वोरष्ठिवतोश्च आयतने उलूखलमुसले निदधाति। दीर्घत्वादष्ठीवतोरूर्वोश्च निदधातुं शक्यते॥ २२॥

१. $A^1$ and $A^2$. पात्र्योः
२. T. Here ends this khaṇḍa
३. L. वृषालरवं
४. L. केचिदभिषवञ्चार्थं एको
५. L. वायसव्यस्य प्रक्षवाने
६. A. साकमपि
७. A. विधीयन्ते
८. L. कृष्णाजिनं पात्र्या सह
९. A. उपरस्थले

पत्तोऽग्निहोत्रपात्राणि ॥२३॥ तानि घृतेन पृषदाज्येन वा पूरयित्वाभि-घार्याजं बध्नीयाद् दर्भमयेनाबलेन वा ॥२४॥ अजं द्रवन्तमनुमन्त्रयते "अजो भागः" इति ॥२५॥ "अयं वै त्वमस्मादयं ते योनिस्त्वमस्य योनिः । पिता पुत्रस्य लोककृज्जातवेदः । वहस्वैनं सुकृतां यत्र लोकः । अयं वै त्वामजनयदयं

पत्तो......त्राणि ॥ इतराणि अग्निहोत्रपात्राणि पादयोर्निदधाति । कूर्चद्वय-मग्निहोत्रस्थालीं च स्रुवस्य अग्निहोत्रहवण्याश्च विनियुक्तत्वात्; अग्निहोत्रशब्देन चाग्नयो लक्ष्यन्ते । अग्निहोत्रसंबद्धानि यानिकानिचिदविनियुक्तानि पात्राणि, तानि पादयोर्निदधाति, अन्वाहार्यस्थालीं मदन्तीस्थालीमित्येवमादीनि ॥ २३ ॥

तानि......लेन[न वा] ॥ तानि पात्राणि तथा सादितानि घृतेन पृषदाज्येन वा पूरयेद् यानि सबिलानि । यानि तु विवर्जितानि स्फ्यादीनि तान्यज्यात् । तद्धि तेषां पूरणम् । सर्वाणि वा अभिघारयेदित्यनुकल्पोऽयम्, गुरुलघुकल्पयोस्तुल्यत्वानुपपत्ते-रित्युक्तमेव । दर्भमयेन अबलेन वा शिथिलेन योक्त्रेण अजं पूर्वोपहितं काष्ठसञ्चयने बध्नीयात् । यथा स्वयमेव सञ्छिद्य प्रद्रवति तथा सम्पादयेत् ॥ २४ ॥

अजं......इति ॥ तमजं स्वयमेव सञ्छिद्य प्रद्रवन्तम् "अजो भागः" इत्यन-यर्चानुमन्त्रयते ॥ २५ ॥

अयं......मन्ति ॥ "अयं वै त्वमस्मात्" इत्यनेन मन्त्रेण प्राक् संस्कृतेन आज्येन स्रुवेणाज्याहुतीमाहवनीये जुहोति । "आहवनीयं सर्वाहुतीनाम्" इति परिभाषया चाहवनीये होमः । "जुहूश्च पात्रम्" इति परिभाषितत्वात् तन्निवृत्त्यर्थं स्रुवेणेति वचनम् । यद्यपि पात्रचये स्रुवस्य प्रतिपादनमुक्तम्, तथाप्येतामाहुतिं हुत्वा पश्चात् स्रुवं नासिकापुटे निदध्यात्, पूरयेच्च । पाठक्रमादर्थक्रमो बलीयान् । यद्यपि पूर्वं सादितं स्रुवमादाय होमं कृत्वा पुनः सादनं क्रियेत, तथापि पूर्वं सादनमदृष्टार्थं

१. A². पादतः शूर्पशङ्कदोनत्तोऽग्निहोत्र
२. T. घार्य वाचं
३. T omits वै
४. T and A¹. लोकाः
५. A. शब्दौ
६. L. तान्याज्ञीतेषां
७. A omits लघु
८. A adds जुहूश्च होमः
९. A omits सादितं...पूर्वं

त्वयि जायतामसौ स्वाहा" इति स्रुवेण हुत्वोदङ्ङुत्क्रामन्ति ॥२६॥ उपोषन्त्यग्निभिः ॥२७॥ प्रगृह्योल्मुकेन "मैनमग्ने विदहः" इति संप्रदीप्ते दशर्चं जपित्वा सव्यावृत्तोऽनवेक्षमाणाः प्रागुदञ्चः प्रक्रान्तान् "मृत्योः पदम्" इत्यनु-

स्यात्; अतः "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति तृतीयानिर्देशात् सत्यपि दहनं प्रति पारार्थ्ये कृतप्रयोजनत्वात् प्रत्यक्षा प्रतिपत्तिरग्नेर्न शक्यते। करणनिर्देशाच्च दहनसाधनीभावः सिद्धः; ततश्चोभयं प्रयोजनं नास्ति, दृष्टार्थतैव स्यात्। तस्मात् कृते होमे सादनं पूरणं च कर्तव्यम्। दार्शपौर्णमासिकेन स्रुवेण होमः कर्तव्यः। स हि सर्वार्थः आग्निहोत्रिकः तद्विषय एव। "जुहोतीत्युक्ते सर्पिः प्रतीयेत" इति परिभाषासिद्धस्य आज्यस्य पुनर्वचनं प्रकृतोपादानार्थम्। पूर्वसंस्कृतमाज्यमुपादातव्यम्, नैवमर्थं पुनराज्यं संस्कर्तव्यमिति ज्ञाप्यते। होमं कृत्वोदङ्ङुत्क्रामति। काष्ठसञ्चयस्योत्तरतः दक्षिणामुखस्तिष्ठति। "येनाधिकरणेन संयुज्येत, न तेन व्यावर्तेत" इति वचनात्॥ २६॥

उपो......भिः ॥ काष्ठसञ्चये उपोषन्त्यग्निभिः संप्रज्वलितैः यथा समस्तः काष्ठसञ्चयः एकीभूतो दीप्यते तथा कुर्वन्ति। अग्नीनामवसितप्रयोजनत्वात् संसर्गदोषो नास्ति॥ २७॥

प्रगृ......द्वाभ्याम्॥ पूर्वोपनीतमुल्मुकं गार्हपत्येऽनुप्रहृत्य संप्रदीप्तेऽग्नौ एकीभावमुपगम्य प्रज्वलिते। समित्येकीभावे वर्तते। प्रशब्दः प्रकर्षे। तथाभूतेऽग्नौ "मैनमग्ने विदहः" इति दशर्चं प्रेतमग्निं चाभिमुखो जपति मन्त्रलिङ्गात्, ततोऽपरान्ते तिष्ठन् प्रेतस्य सव्यावृत्तः अपसव्यमावृत्ताननवेक्षमाणान् प्रत्यावृत्य प्रेतमग्निं चानवेक्षमाणान् प्रागुदञ्चः प्रक्रान्तान् प्रागुदगभिमुखान् प्रक्रान्तान् गच्छतः "मृत्योः पदम्" इति द्वाभ्यामृग्भ्यां संस्कर्तानुमन्त्रयेत। "तथाभूतान्सम्बन्धिनोऽनुमन्त्रयेत" इति वचनात् संबन्धिनोऽपि तथाभूता गच्छन्तीत्यवगम्यते, वृद्धकुमारीवत्। यथा वृद्धकुमारी

१. A[1]. सुप्रदीप्ते
२. A[1]. दशर्चो
३. L. प्रत्यक्षं त्युपार्था प्रति
४. L. काष्ठ एक सञ्चयः
५. L omits गम्य
६. A omits वृद्धकुमारीवत् यथा

आहिताग्नि संस्कारः



मन्त्रयते द्वाभ्याम् ॥२८॥ आचार्यस्य च मातापित्रोर्वपित्वा तीर्थं गत्वा तस्य पश्चात् तिर्यक् त्रीँल्लुन्मृज्य तेष्वश्मनो निधाय पलाशशाखे ग्रन्थिं कृत्वा तयोरधोऽतिक्रामन्ति ॥२९॥

"देवस्य सवितुः पवित्रं सहस्रधारं विततमन्तरिक्षे ।
येनापुनदिन्द्रमनार्तमार्त्यै तेनाहं सर्वतनुं पुनामि ॥"

इत्यनुमन्त्र्य एतान् पृथग् जघन्यः शाखे व्यत्यस्येत् ॥३०॥

महेन्द्राद्वरं वव्रे—पुत्रा ममाविधवाया बहुक्षीरलवणमांसमोदनं सौवर्णपात्रे मया सह भुञ्जीरन्—इति भर्तृलाभादयो बहवो वरा वृता भवन्ति ॥ २८ ॥

आचार्य......मन्ति ॥ ततः संस्कर्त्रा सह सर्वे सम्बन्धिनः, अनवेक्षमाणा इति ईक्षणस्य प्रतिषिद्धत्वात् ईक्षणगोचरव्यतीते देशे उपविशन्ति । आचार्यस्य मातापित्रोश्च केशश्मश्रुलोमनखावापनं कुर्वन्ति । येषामाचार्यः पिता माता वा प्रेतः, ते वपनं कुर्वन्ति, नान्येषां वपनमस्ति । प्रतिषिद्धं हि कारणाभावे स्नातकानां वपनं शिखावर्जं च वपनम् । "रिक्तो वा एष अनवहितो यन्मुण्डने चोदिते विशिखार्मनुनं तस्यैतदविधानं यच्छिखा तस्माच्छिखां न वापयेरन्" इति वाजसनेये प्रतिषिद्धत्वात् अनूबन्ध्यस्य च वपायां संस्थितायां वपने चोदिते विशिखामनु प्रवपन्त इति सत्रे वपनं वपनचोदनायां शिखाया अवाप्तव्यतां द्योतयति । स्नानार्थं तीर्थं सुखप्रवेशयोग्यं गत्वा तस्य तीर्थस्य पश्चात्तिर्यक् त्रीन् लेखाविशेषान् दक्षिणोत्तरायतानुन्मृज्य लिखित्वा तेषून्मृष्टेषु प्रदेशेषु त्रीनश्मनो निधाय द्वे पलाशशाखे ग्रथित्वा अग्रे बध्वा तयोः पलाशशाखयोरध अश्मनो लेखाश्चोल्लङ्घ्य सर्वे सम्बन्धिनो गच्छन्ति ॥ २९ ॥

देव......त्यस्येत् ॥ "देवस्य सवितुः" इत्यनेन तान् गच्छन्तोऽभिमन्त्र्य आभिमुख्येन ॥ ३० ॥

१. T. तीर्थस्य
२. T. त्रिरनुमृज्य
३. A[1] omits अनार्तं
४. A[2] पुमान्
५. A[1] and T. तान्
६. A omits this sūtra.
७. A adds मन्त्रि
८. L. विशिखाननुं
९. A. एतदपि विधानं
१०. A omits च
११. L. आवपतव्यतां

"या राष्ट्रात्पर्णादुपयन्ति शाखा अभीवृता नृपतिमिच्छमानाः ।
धातुस्थाः सर्वाः पवनेन शुद्धाः पूता भवत यज्ञियासः ॥" इति ॥३१॥

अथ चतुर्थः खण्डः

"आपो हि ष्ठा" "स ना च सोम" इत्युदकं स्पृशन्ति सूक्ताभ्याम् ॥१॥ शिरसि गोमयं कृत्वा शुष्कमनुस्रोतसमनुपनिमज्जन्तोऽसन्तापमानाः ॥२॥ "आपो अस्मान्" इत्याकृष्योदकं प्रसिञ्चेयुः 'एतत्त उदकमपोऽसौ' इत्यपो भूमौ निषिञ्चन्ति

या......इति ॥ मन्त्रयित्वा स्वयं पश्चादवस्थितस्ते शाखे विमुच्य पृथगद्वयोर्दिशो व्यत्यस्येत्, प्रक्षिपेत्—"या राष्ट्रात्" इत्यनेन मन्त्रेण ॥ ३१ ॥

अथ चतुर्थः खण्डः

आपो......क्ताभ्याम् ॥ एताभ्यां सूक्ताभ्यामुदकं स्पृशन्ति । अभ्यवयन्ति अभ्युत्क्षिपन्ति । मन्त्रपृथक्त्वात् कर्मपृथक्त्वमिति वचनात्, प्रत्यृचं मन्त्राणां भिन्नत्वात्, प्रत्यृचमभ्युत्क्षिपन्ति ॥ १ ॥

कथं स्नाति इति स्नानस्य विशेषा उच्यन्ते—

शिर......मानाः ॥ शिरसि गोमयं शुष्कं कृत्वा स्नातीति । करोतिरत्र निधानार्थः । अश्मानमितः कुर्वन्ति इति यथा । अनुस्रोतसमिति स्रोतो वीक्षमाणा स्रोतोवशेन स्नान्ति । अनुपनिमज्जन्तः शिरोऽवगाहनमकुर्वन्तः । पाणिभ्यामुदकमासिच्य स्नान्ति । असन्तापमानाः, सन्तापं शोकमकुर्वन्तः, प्रयत्नेन शोकं निरसितुमभिलषन्तः ॥

आपो......स्पृश्य ॥ "आपो अस्मान्" इत्यनयर्चा उदकान्निष्क्रम्य उदकं प्रसिञ्चेयुः । कथमिति चेत्—"एतत्त उदकमपोऽसौ" इति नाम निर्दिशन्ति । भूमावेवपस्त्रिरप उपस्पृश्योपस्पृश्य निषिञ्चन्ति । सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन् । अयुग्मान् दक्षिणामुखान् इत्येवमादयो धर्मशास्त्रोक्ता विशेषा

१. T. अभिप्रतान्
२. T. गूढाः
३. T. जयन्तः
४. A[1]. कृत्योदकं T. क्रम्योदकं
५. A omits this sūtra.
६. L. अभ्यसक्षिपन्ति
७. L omits प्रत्यृ...त्वात्
८. A. स्नानविशेषाः
९. L adds इति
१०. A. वचस्त्रिरपः

आहिताग्नि लेखकार:



त्रिरुपस्पृश्योपस्पृश्य ॥३॥ सञ्चित्वापि ॥४॥ एकैकामन्यत्रोभयतः काल आ प्रदानात् ॥५॥ ग्रामं गत्वा द्वार्युदपात्रे दूर्वायवसर्षपानोप्यार्द्रगोमये निधाय "अश्मन्वतीः" इत्यभ्यक्तमश्मानमुदपात्रं च संमृशन्ति॥६॥"तच्चक्षुः" इत्यादित्य-

उपेक्ष्याः। अपो भूमौ निषिञ्चन्ति इत्येव सिद्धे उदकं प्रसिञ्चेयुः इति मन्त्रसम्बन्धार्थमुच्यते। यदा यदोदकं प्रसिञ्चेयुः, तदा तदा "आपो अस्मान्" इत्याक्रम्य प्रसिञ्चेयुरिति। समस्तेतिकर्तव्यतापरिग्रहार्थमिति केचित्। सह सूक्ताभ्यां येयं स्नानेतिकर्तव्यता सा प्रत्युदकसेचनमावर्तत इति परप्रत्ययात् निर्णयः कर्तव्यः। उभयथा हि वाक्यं योजयितुं शक्यते। विनिगमनायां हेतुर्नास्ति ॥ ३ ॥

सञ्चित्वापि ॥ यस्मिन्नहनि सञ्चयनं क्रियते, तस्मिन्नहनि त्रिरुदकसेचनमवश्यकर्तव्यम् ॥ ४ ॥

एकै......दानात् ॥ अन्येषु दिवसेषु आ श्राद्धप्रदानादुभयतः काल उभयोः कालयोः सायंप्रातरेकैकामुदकप्रसिद्धिं कुर्वन्ति पूर्वोक्तेन क्रमेण। आ प्रदानादिति मर्यादायामाकारः। तस्माच्छ्राद्धदिवसे सकृदुदकसेचनं कर्तव्यम्। श्राद्धे निवृत्ते निमित्तस्योपहतत्वात्[1] द्वितीयमुदसेचनं निवर्तते, आकारस्य अभिविध्यर्थतां मन्यमाना आ चतुर्थविसर्गात् संवत्सरं केचित् कुर्वन्ति। पूर्वोक्तमेव न्याय्यः। तथा हि परप्रत्ययः। सन्दिग्धानां हि वाक्यानां परप्रत्ययान्निर्णयो न्याय्यः ॥ ५ ॥

ग्रामं......शन्ति ॥ ततो ग्रामं गत्वा ग्रामद्वारे ग्रामारण्यसन्धौ उदपात्रं निधाप्य तस्मिन् दूर्वायवसर्षपानोप्य तदुदपात्रमार्द्रे गोमये निधायाश्मानं चाभ्यक्तेन[2] संस्पृष्टं निधाय "अश्मन्वतीरीयते" इत्यनयर्चाभ्यक्तमश्मानमुदपात्रं च युगपदभिमृशन्ति। अभिम्रष्टव्यभेदान्मन्त्रावृत्तिरेके मन्यन्ते। तदनुपपन्नम्। समित्ययमेकीभावे वर्तते। द्रव्ये एकीकृत्य युगपदभिमृशन्तीत्यर्थः। सम्मृशन्तीत्युक्तम् ॥ ६ ॥

तच्च......स्थाय ॥ "तच्चक्षुः" इत्यादित्यमुपस्थाय ग्रामं प्रविशतीति वाक्यशेषः। अस्तमितश्चेदादित्यः, अग्निमनेन मन्त्रेणोपतिष्ठेरन्। "असावस्तं यत्सायेऽग्नावादित्य आत्मानं जुहोति" इति श्रुतेरादित्योऽग्निं प्रविष्ट इति मन्यामहे। "यद्युवा अस्तमित आदित्यो भवति, आहवनीयमेवैते यजुषोपतिष्ठन्ते" इति परप्रत्ययश्च विस्पष्टः ॥ ७ ॥

१. A. स्योपत्या द्वि-　　२. A. अभ्यक्तं तेन

मुपस्थाय रात्रौ चेत[चेदनने]नर्चाग्निमुपस्थाय॥७॥तन्तून् वा दशासु बध्वा॥८॥ अधःशय्या हविष्यभक्षता प्रत्यूहनं च कर्मणामेकरात्रं त्रिरात्रं नवरात्रं वा॥९॥ नाघाहानि वर्धयेयुरिति ह स्माह कौषीतकिः॥१०॥

तन्तू......द्ध्वा ॥ तन्तूनन्यान्वसनदशासु बध्वा ग्रामं प्रविशन्ति । तस्यैवं तन्तुबन्धनस्य भावाभावौ वाशब्देनोच्यते । अतुल्यकार्यत्वादादित्योपस्थानेन विकल्पः ॥ ८ ॥

अध......त्रं वा ॥ अधश्शय्या भूमौ शयनम्; हविष्यो भक्षो यस्य सोऽयं हविष्यभक्षः, तस्य भावो हविष्यभक्षता । "रेवती जगती हविष्याज्यं प्रशस्य" इत्युक्तत्वात् । प्रशस्य आहारो हविष्यशब्देनोच्यते । हविरर्थो हविष्यमिति व्युत्पादनाद्धविष्योत्पत्तियोग्यं यद्द्रव्यं तद्धविष्यमित्युच्यते । माषक्षारलवणमधुमांससंस्कारद्रव्याणीति प्रतिषिद्धवर्जमुपयुञ्जीरन् । प्रत्यूहनमुत्सादनमुपरमं कर्मणां कुर्वन्त आसते ।

"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥"

इत्येवमादीनि निवर्तन्ते, धर्मशास्त्रे प्रतिषिद्धत्वात् । नाग्निसम्बद्धानां कर्मणां नित्यानां निवृत्तिः प्रत्यूहेत् "नाग्निषु क्रिया" इति वचनात् । एतानि व्रतान्येकरात्रं त्रिरात्रं नवरात्रं वा भवन्ति । अत ऊर्ध्वं कामचारः ॥ ९ ॥

नाघा......तकिः ॥ अघाहानि दुःखाहानि दुःखदिवसानि न वर्धयेयुः, लघुकल्पमेवाश्रयेरन्, न गुरुकल्पं निष्प्रयोजनत्वादिति कौषीतकिराचार्यो मन्यते । लघुकल्पाश्रयेऽपि प्रत्यूहनं कर्मणामा दशरात्रं कुर्वीरन्, धर्मशास्त्रेषु प्रतिषिद्धत्वादिति केचित् । अस्माकं तु "व्रतापवर्गे श्राद्धकर्म" इति वचनात् व्रतकालादूर्ध्वं श्राद्धक्रिया न तत्प्रत्यूहनेऽवकल्पते । भोक्तुर्दातुश्च दोषः स्यात् ।

"शब्दप्रमाणके चार्थे यच्छब्देनाभिधीयते ।
तदनाशङ्कमानेन कर्तव्यम् ॥"

१. A[2] omits रात्रौ...स्थाय
२. A. विशेष्यात् पङ्क्ति
३. A. तदशङ्क

अस्थि संचयनादि



## अथ पञ्चमः खण्डः

आ वा संचयनाद्व्रतानि ॥१॥ अपरपक्षे सञ्चिनोति ॥२॥ अशान्तेऽग्नावेके ॥३॥ गत्वा दहनं दक्षिणतोऽङ्गारान्निरूह्याहुतीस्तिस्रो जुहोति "अवसृज

सत्यपि धर्मशास्त्रविरोधे "आ वा संचयनात्" इत्येतस्मिन् पक्षे "अपरपक्षे सञ्चिनोति" इति वैकस्मिन् पक्ष आश्रियमाणे व्रतदिवसेष्वभिवर्धमानेषु दशरात्रेऽतीतेऽपि व्रतापवर्ग एव श्राद्धकर्म कर्तव्यमित्येवमर्थं "व्रतापवर्गे श्राद्धकर्म" इत्युच्यते इति न्यायः। सत्यां व्याख्यान्तरगतौ न धर्मशास्त्रविरोधो न्याय्यः। तस्मादाद्यमेव व्याख्यानम् ॥ १० ॥

## अथ पञ्चमः खण्डः

आवा......तानि ॥ आ वा संचयनाद्व्रतान्येतानि भवन्ति इत्यपरः कल्पः ॥ १ ॥

अप......नोति ॥ अपरपक्ष आगते सञ्चयनं कर्तव्यम्। यद्यपि पूर्वपक्षे प्रेतः, तथाप्यपरपक्षः प्रतीक्ष्यः[2]। अपरपक्षे मृतस्य नास्ति प्रतीक्षणम्; अनन्तरमेव कर्तव्यम् ॥ २ ॥

अशा......वेके ॥ श्मशानाग्नावनुपशान्ते सञ्चयनमेके कुर्वन्ति, नापरपक्षे ॥

गत्वा......तिसृभिः ॥ दहनं गत्वा तत्रस्थानङ्गारान् दक्षिणतो निरूह्य एताभिस्तिसृभिस्तिस्र आहुतीर्जुहोति। यद्यपरपक्षे उपशान्तेऽग्नौ सञ्चयनम, लौकिकमग्निमादाय श्मशानस्य दक्षिणतः प्रज्वाल्य होमः कर्तव्यः, सामर्थ्यात्; अदृष्टार्थो हि होमः। न तस्य अग्नेः संस्कारार्थत्वम्, संस्कृतेन प्रयोजनाभावात्। गृह्यप्रोक्तेन विधानेनाज्यं संस्कृत्य पात्रसंस्कारं च कृत्वा होमः कर्तव्यः। तस्य करणं पुरस्तात् परिभाषितत्वाद् जुहूर्होमार्था, अवदानार्थः स्रुवः। "पालाशी तु स्रुगेव स्याद्वा पार्णः

१. T. Space is here left out for writing a few syllables.
२. A. प्रतीक्षन्ते
३. A omits this sūtra.
४. A omits this word.
५. A omits विधानेन

पुनरग्ने" इत्येताभिस्तिसृभिः ॥४॥ उदुम्बरशाखाभिः क्षीरोदकैरभ्यवोक्षति

"यं ते अग्निं मन्थाम वृषभायेव पक्तवे ।
इमं तं शमयामसि क्षीरेण चोदकेन च ॥
यं त्वमग्ने समदहस्तमु निर्वापया पुनः ।
कियाम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा ॥
शीतिके शीतिकावति ह्लादिके ह्लादिकावति ।
मण्डूक्या सु सङ्गमेमं स्वग्निं शमय ॥५॥

खादिरः स्रुवः" इति वृक्षनियमः। उत्तरहोमप्रयुक्तानि हि पात्राणि होमे सत्युत्पा-
द्यानि। कृतप्रयोजनानां हि द्रव्याणां प्रयोजनसमाप्तावपवर्गो न्याय्यः। अन्येषां
पात्राणां तस्मिन्नग्नौ प्रतिपादितत्वादनयोरपि तत्रानुप्रहरणं कर्तव्यम् ॥ ४ ॥

उदु...क्षति[शमय] ॥ क्षीरसंवृत्त[पृक्त]मुदकमुदुम्बरशाखाभिरुपहृत्य तमग्नि-
मभ्यवोक्षति "यं ते अग्निम्" इत्येताभिः तिसृभिः। 'मन्त्रपृथक्त्वात् कर्मपृथक्त्वम्'
इति वचनात् प्रत्यृचमभ्यवोक्षणं कर्तव्यम्। उदुम्बरशाखाभिः क्षीरोदकैरिति
द्वयोस्तृतीयया साधनत्वे सत्यपि "अर्थाद्वा कल्पनैकदेशत्वात्" इत्यनेन न्यायेन
यथा शक्यते साधनीभाव आपादयितुं तथा कर्तव्यम्। उदुम्बरशाखाश्च क्षीरोद-
घातद्वारेण सेचनं साधयन्ति, नान्यथा; क्षीरोदकं साक्षात्सेचनं साधयति; यथा
देवदत्तः कटे कंसपात्र्यामोदनं भुङ्क्ते इति कटे आसीनं कंसपात्र्यामोदनं निधाय इति
गम्यते। असत्यपि मन्त्रावधिपरिज्ञानार्थे इतिकरणे तिसृभिरिति पूर्वप्रकृतस्यानु-
वर्तनान्मन्त्रावधिः परिज्ञायते। किमर्थमनुवर्तनमिति चेत्, द्वयोस्तृचयोर्वैदि-
कत्वान्मन्त्रलिङ्गत्वाच्च मन्त्रा विभक्तव्याः। न चान्यो विभागो वा यो विद्यते। तस्मात्
तिसृभिरित्यनुवर्तते ॥ ५ ॥

१. A[2] omits this word.
२. T. Space is here left out for writing a few syllables.
३. T. इमं त्वमिन्द्र्यामसि क्षीरेण
४. A[2]. शम
५. A[2] and T. तयनिर्वा
६. L omits द्वयोः
७. A. क्षीरोदकोपघात
८. A omits इति

शं ते स्रवन्तीस्तन्वापः शमु ते सन्तु कूप्याः[1] ।
शं ते धन्वन्या आपः शमु ते सन्तु नूप्याः ॥
शं ते समुद्रिया आपः शमु ते सन्तु वर्ष्याः ।
शं ते नीहारो वर्षतु शमु कृष्वावशीयताम्[3] ॥"

इत्यद्भिरभ्युपोक्षति ॥६॥

अथ षष्ठः खण्डः

पुराणे[4] कुम्भे शरीराण्योप्य "उपसर्प मातरम्" इति तिसृभिररण्ये[5]

शन्ते......क्षति ॥ "शं ते स्रवन्तीः" इत्येतैर्मन्त्रैः केवलाभिरद्भिः तमग्निमभ्युपोक्षति ; यथाग्निरुपशाम्यति तथा करोति ; प्रत्यर्धर्चं वाक्यानां परिसमाप्तत्वात् प्रत्यर्धर्चमभ्युपोक्षणं कर्तव्यम् ॥ ६ ॥

अथ षष्ठः खण्डः

पुरा......नन्ति ॥ पुराणे कस्मिंश्चित् कुम्भे शारीराण्यस्थीन्यदग्धानि युगपत्सन्युप्यारण्ये पुण्ये देशे गङ्गादीनामन्यतमस्मिन् "उपसर्प मातरम्" इति तिसृभिः ऋग्भिः निखनन्ति[6] । भूमिं खात्वा अवटे कुम्भं निदधाति । खननक्रियायामनियतकर्तृकत्वज्ञापनार्थं बहुवचनम । अवटे निधानं संस्कर्तैव करोति । अवटमरण्ये खनन्ति परिकर्मिणः । तस्मिन्नवटेऽस्थिकुम्भमेतैर्मन्त्रैर्निदधातीति वाक्याध्याहारः । मन्त्रार्थे प्रदर्शिते हि कर्मण्यनुष्ठीयमाने मन्त्राणां दृष्टप्रयोजनता भवति । "अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्" इति भगवता जैमिनिना उक्तम् । कुम्भनिधानक्रियां च प्रदर्शयितुं ते मन्त्राः शक्नुवन्ति[7], न खननक्रियाम् । खनन्तिशब्द इह खाते प्रदेशे निधानं सामर्थ्याद्भिधत्ते, तथा अर्थप्रतीतेः । तथा सति बहुवचननिर्देशोऽ-

१. A[1]. कुप्याः
२. T omits from here to the end of the khaṇḍa. The next khaṇḍa is in continuation and not a separate one.
३. A[1]. शीयाम्
४. T omits पुराणे कुम्भे
५. A[1] and T add भूमिमेताम्
६. A. निलनन्ति
७. L adds प्रदर्शयितुं

निखनन्ति ॥१॥ "उत्ते स्तभ्नामि" इति लोष्टेनापिधाय ॥२॥ प्रवसतस्तु प्रेतस्यापि वान्यवत्सायाः पयसा तूष्णींन्यायमग्निहोत्रम् ॥३॥ अधस्ताद्धारणं समिधः ॥४॥ आ शरीराणां सङ्गमाददर्शने शरीराणां चत्वारिंशच्छिरसि

नियतकर्तृकत्वज्ञापनार्थः। यद्यपि संस्कर्ता दूरदेशे गमनासमर्थः, तथाप्यन्ये संबन्धिनः शक्ताः; स्निग्धाश्चास्थिकुम्भमादाय गङ्गादिषु पुण्येषु देशेषु निखनेयुः।

"यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति।
तावत् स्वर्गे समारुह्य मोदते विगतज्वरः॥"

इत्येवमादिश्रवणात् पिधानयोग्येन कुम्भमपिधाय मन्त्रं च प्रब्रूयुः इत्येवमर्थो बहुवचननिर्देशः॥ १॥

उत्ते......धाय ॥ लोष्टेनापिधानयोग्येन कुम्भमपिधाय गच्छन्ति इति वाक्यशेषसामर्थ्यादध्याह्रियत इति॥ २॥

प्रव......होत्रम् ॥ यदि प्रवासे यजमानो म्रियते तदीयशरीरमग्निसमीपं नयेयुः, अग्नीन्वा शरीरसमीपं हरेयुः; यदि दूरदेशत्वादनयोरन्यतरं न शक्यते, ततः तूष्णीमेव दग्ध्वा अस्थीन्यग्निसमीपं नयेयुः। तेषामदर्शनादग्निहोत्रं जुहोति कश्चिद्यजमानपुरुषः। योऽग्निहोत्रे प्राङ्नियुक्तः सोऽपि वान्यवत्साया मृतवत्साया गोपयसा। तूष्णीं न्यायो यस्य तदिदं तूष्णींन्यायम्। मन्त्रवर्जं सर्वान् प्रयोगान् कृत्वा यागदेवतां मनसा ध्यात्वा अग्निहोत्रं जुहोति। न हि देवतायामसत्यां यागः सम्भवति॥ ३॥

अधः......रणं [समिधः] ॥ समिधं च स्रुचोऽधस्ताद्धारयन्ति। तत एवं ज्ञायते—स्रुच उपरिष्टादन्यत्र समिद्धारयितव्या इति॥ ४॥

आश......मानम् ॥ यदि शरीरस्यास्थीनि प्रयत्नेन अन्विच्छद्भिरपि व्यामोहत्वाद्दूरत्वाच्च द्रष्टुं न शक्यते, पलाशवृन्तानां त्रीणि षष्टिशतान्याहृत्य तैः पुरुषाकृतिं

१. T. प्रसन्तं पयसा तूष्णीं
२. A[1] and T. धारिणं
३. A. त एव च निधानमस्थमपिधानमन्त्रं च
४. A omits मृतवत्सायाः
५. A omits this sūtra.

ग्रीवायां दशांसान्वांसयोः बाहुभ्यां शतमङ्गुलीभिर्दशोरसि त्रिंशज्जठरे विंशतिः षड् वृषणयोः शिश्ने चत्वार्यूरुभ्यां शतं त्रिंशज्जानुजङ्घाष्ठीवतोः पादतोऽङ्गुलीभिर्दश। एवं त्रीणि षष्टिशतानि पलाशवृन्तानामाहृत्य पुरुषाकृतिं कृत्वोर्णासूत्रैः परिवेष्टय यवचूर्णैः परिलिप्य सर्पिषा सन्नीय दीपनप्रभृति समानम् ॥५॥ इच्छन्पत्नीं पूर्वमारिणीमग्निभिः संस्कृत्य सान्तपनेन वान्यामानीय ततः पुनरादधीत ॥६॥

कृत्वा ऊर्णासूत्रे परिवेष्टय यथा तान्याशिथिलानि भवन्ति, तथा कृत्वा यवचूर्णैः श्लक्ष्णपिष्टैः प्रलिप्य तदीयं शरीरमिति मत्वा अथोल्मुकं गार्हपत्य आदीप्य इत्यतः प्रभृति सर्वामितिकर्तव्यतां कुर्यात् ॥ ५ ॥

इच्छन्......धीत ॥ भर्तुः पूर्वं यदि पत्नी म्रियेत, तां यथाविधि संस्कृत्याग्निभिः सान्तपनेन वा अन्यामानीय पुनर्दारक्रियां कृत्वा पुनराधानमिच्छन् कुर्यादिति। पुनरप्यग्निहोत्रादिकर्म यदि कर्तुमिच्छति, पुनर्दारक्रियां पुनराधानं च कुर्यात्। पिता विद्यते पितरश्च सोम इत्यृणत्रयस्यापाकृतत्वादुपनिषत्प्रोक्तं पितापुत्रीयं विधिं कृत्वा पुत्रैश्वर्ये पिता वसेत्। परिव्रजेदित्यनयोरन्यतरं मार्गमाश्रयेत पुनरध्यानपरो भूत्वा प्राणायामादिभिरात्मानं विशोधयेयुः। क्षपयेदित्येवमर्थमि[मिच्छन्नि]त्युक्तम्। अपरे तावदिच्छन्नित्येतं शब्दमग्निभिः संस्कृत्येत्यनया सम्बन्धयन्ति। इच्छन्नग्निभिः संस्कुर्यात्, अनिच्छन् सान्तपनेन दहेदिति। तथा सत्यनिच्छतो विषयविशेषो मृग्यः। यद्यग्निपरिचरणयोग्या पत्नी, किमर्थमग्निभिर्न संस्क्रियते? यद्ययोग्या, उभयप्रयुक्तत्वादग्नीनां तस्यां पतितायां पूर्वाग्नयो लौकिकाः सम्पन्नाः, न दहनाशङ्काग्निभिः संस्कारं नार्हन्ति। सान्तपनेन संस्कारमर्हति। अर्धजरतीयो न लभ्यः, योग्या चेत्सर्वत्र योग्या; अयोग्या चेन्नान्यसंस्कारं नार्हति; तस्मादेतदपव्याख्यानम्। पूर्वोक्तमेव व्याख्यानम्।

ननु पूर्वोक्तेऽपि व्याख्याने यावज्जीविको नियमो बाध्यते। न बाध्यत इति ब्रूमः, उभयोः साधारणा अग्नयः, साधारणानीमान्यग्निहोत्रादीनि कर्माणि। तत्र

१. T. दशाम्वंसयोः
२. T. Space is left out for writing वृन्तानां
३. L. आश्रयते
४. L. पुनरध्यापरो
५. A. एतदेव व्याख्यानं

यावज्जीवमित्यनेन च द्वयोर्जीवनमग्निहोत्रादीनां निमित्तत्वेनाश्रीयते । तच्च निमित्तमुत्सन्नम्, यथा भर्तारमन्तरेण पत्न्या अनधिकारः, तद्वत्पत्नीमन्तरेणापि न भर्तुरधिकारः। मृते भर्तरि पत्नी नान्यं भर्तारमुपादाय कर्माणि निर्वर्तयितुमर्हति, धर्मशास्त्रेषु प्रतिषिद्धत्वात्। भर्ता पुनः पत्न्यां मृतायां पुनरन्यां पत्नीमानीय, पुनः कर्माणि निर्वर्तयितुमर्हति, अप्रतिषिद्धत्वात् । तस्मादन्यामानीय पुनरादधीत इत्युक्तम् । एवं चेत् पाक्षिकत्वान्नोपपद्यते । नित्योऽयं विधिः प्राप्नोति । नैतदेवम्; पूर्वस्तावन्नियमः पर्यवसितः । पुनरारम्भो ह्यसौ । पुनरारम्भे च कामचारः। "चत्वार आश्रमाः। ब्रह्मचारी गृहस्थो वानप्रस्थः परिव्राजकः। तेषां वेदमधीत्य वेदौ वेदान् वा चीर्णब्रह्मचर्यो यमिच्छेत् तमावसेत्" इति भगवता वसिष्ठेन अभ्यधायि। अस्मदीयः पक्ष इति चोपनिषद्वचनात् प्रदर्शितम् "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इति मानवीयं वचनमनुगृहीतम्। ऋणत्रयस्य पूर्वमपाकृतत्वात् "जरामर्यं वा एतत्सत्रं यदग्निहोत्रं जरया ह वा एतस्मान्मुच्यते, मृत्युनान्वेति"[इति]। एतदपि वेदवचनं जीर्णस्याश्रमान्तरप्रतिपत्तिमवगमयति। "एकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद् गार्हस्थ्यस्य" इत्येतस्मिन् पक्षे गौतमबौधायनापस्तम्बाभिमतमवकल्पते। यः पुनर्दाराँल्लभते, यष्टुं च समर्थः स एवाधिक्रियते। असमर्थस्य आश्रमान्तरप्रतिपत्तिं द्योतयितुमिच्छन् इत्युक्तम्। अस्मिन् पक्षे "सान्तपनेन वा" इत्येतदपि समर्थितम्। यस्याग्नयो न विद्यन्ते, औपासनं च, तस्य दहनाग्निः सान्तपनो विधीयते। अकृतदाराणां कन्यानां विधवानां विनष्टाग्नीनां च प्राक् प्रायश्चित्तकरणान्मृतानां दहनाग्निरियं विधीयते। व्यवस्थितश्चायं विकल्पः, अग्निषु विद्यमानेष्वग्निभिरेव संस्कारः, अविद्यमानेषु सान्तपनेन संस्कार इति। सत्यपि सान्तपनशब्दस्य पत्न्या पूर्वमारिण्या सम्बन्धे सामर्थ्यात् सर्वविषयता गृह्यते। अग्नीनामभावः सान्तपनस्य निमित्तं तस्य[3] निमित्तस्य विद्यमानत्वात्; अन्यत्रापि सान्तपन उत्पाद्यः[4]; न चान्यो दहनाग्निरन्येषां चोदितोऽस्ति। अवश्यं च तेन भवितव्यम्। तस्मादग्न्यभावनिमित्तत्वादत्रापि सान्तपन उत्पादयितव्य इति सिद्धम्। मृत्पात्रात् सन्तप्यमानाज्जातस्य सान्तपनस्य लौकिकादग्नेर्विशेष उपपद्यते, अशुचिसंसर्गादीनामभावात्। ततः पुरस्ताद्व्याख्यानमेव सिद्धम्॥ ६॥

१. A. वार्षिकत्वात्

२. A adds हि

३. A. विद्यमानात्

४. A omits उत्पाद्यः...अत्रापि

## अथ सप्तमः खण्डः

व्रतापवर्गे श्राद्धकर्म यथाश्राद्धम् ॥१॥

"अयमोदनः कामदुघोस्त्वनन्तोऽक्षीयमाणः सुरभिः सर्वकामी ।
स त्वोपतिष्ठत्वजरो नित्यपूतः स्वधां दुहानो महतीं तर्पयत्वसौ ॥"

इत्येकपिण्डस्य ॥२॥ अञ्जनाभ्यञ्जनप्रभृति समानम् ॥३॥

## अथ सप्तमः खण्डः

व्रता......श्राद्धम् ॥ व्रतापवर्गे समाप्तिर्व्रतस्य व्रतापवर्गः । अतीते दशरात्रेऽपवर्गस्यावस्थानात् प्रतिनियते काले व्रतेषु समाप्तेषु सञ्चयने कृते श्राद्धकर्म श्राद्धसमाख्या क्रियानुष्ठातव्या । यथा श्राद्धं गृह्यप्रोक्तं तथा कर्तव्यम् । "अथात एकोद्दिष्टम्" [इत्या]रभ्य मासश्राद्धविशेष एकोद्दिष्टस्य उक्तः । स इह किमर्थमुच्यत इति चेत् पिण्डविधानमन्त्रविशेषविषयतयोच्यते । मन्त्रोऽपि कस्मात्तत्रैव नोक्तः ? पितृमेधप्रकरणविधानाच्चेहोच्यते । ये पितृमेधेन [2]संस्कृताः तेषामप्येकोद्दिष्टश्राद्धं विद्यते, अयं मन्त्रो नास्तीत्येवमर्थमिह पाठः क्रियते ॥ १ ॥

अय......ण्डस्य ॥ एकोऽसहायः पिण्ड एकपिण्डः । एकपिण्डस्यायं निधानमन्त्रः । एकोद्दिष्टस्यैवं पितृमेधसंस्कारे निमित्तः । अयं विशेषः—न मासिश्राद्धस्य इति ॥ २ ॥

अञ्ज......मानम् ॥ अञ्जनाभ्यञ्जनगन्धपुष्पधूपदीपांश्च प्रतिपिण्डं दद्यादित्यारभ्य शेषश्राद्धविधिः समानः । वचनमन्तरेणापि सिद्धत्वात् परिसङ्ख्यानार्थं वचनम् । पिण्डदानकालोत्तरभाविनः पदार्था अञ्जनाद्याः प्रोक्ताः कर्तव्याः, अन्येषां तत्र प्रोक्तानामप्युत्सादनं कर्तव्यं केचिदिच्छन्ति । नैतन्न्याय्यम् । तुल्यजातीयस्य नियमः पिण्डदानमभिधाय "अञ्जनाभ्यञ्जनप्रभृति समानम्" इत्युक्तत्वात् पिण्डदाने कृते ये पदार्थाः प्राप्नुवन्ति, तेषां परिसङ्ख्यानं न्याय्यम् ॥ ३ ॥

१. T. यत्विति राविलेक        २. A adds न



K—25

## अथ अष्टमः खण्डः

तस्यापवर्गे परिधिकर्म ॥१॥ आनडुहं लोहितं चर्म प्राग्ग्रीवं वोदग्ग्रीवं वोत्तरलोम पश्चादग्नेरुपस्तीर्य तस्मिन्नुपविश्य ॥२॥ अन्तरेणाग्निमेतांश्चाश्मानं

## अथ अष्टमः खण्डः

तस्य......कर्म ॥ तस्य श्राद्धकर्मणोऽपवर्गे परिसमाप्तौ परिधिकर्म कर्तव्यम्। कर्मनामधेयमेतत्। पाठक्रमादेव श्राद्धकर्मण उत्तरकालतायां सिद्धायां तस्यापवर्ग इति वचनमपवर्गे सति तदानीमेव कर्तव्यमित्येवमर्थम्। शान्तिकर्मत्वात् कालान्तरं न प्रतीक्ष्यम्। यथा अग्निष्टुति समाप्ते उत्थाय त्वाग्निष्टोम इति। शान्तिकर्मत्वादुत्थायैव कर्तव्यम्, न कालान्तरं प्रतीक्ष्यमित्युक्तम् ॥ १ ॥

आन......विश्य ॥ आनडुहमनडुहो विकारः। लोहितं रक्तम्। प्राग् ग्रीवा यस्य तदिदं प्राग्ग्रीवं समस्तं चर्म, न चर्मैकदेशः—इत्येतस्मादेव ज्ञापकान्मन्यामहे। प्राग्ग्रीवोदग्ग्रीवोत्तरलोम पश्चादग्नेरुपस्तीर्य विस्तीर्णं निधाय तस्मिंश्चर्मण्युपविश्य संस्कर्ता परिधिकर्म करोतीति वाक्यशेषः। पश्चादग्नेरिति वचनान्निहितेऽग्नावुपस्तरणं कर्तव्यम्, देशलक्षणार्थत्वादग्निशब्दस्य। यस्मिन् देशेऽग्निं निधास्यामीति मन्यते, तस्य देशस्य पश्चाच्चर्मास्तीर्य तत्रोपविश्य स्थण्डिलोपलेपनादि प्रतिपद्यत इत्येके। परिधिकर्म हि साङ्गम्, तत्रोपविष्टे तत् कर्तव्यमित्यत्रोच्यते, नैकदेशः; ततो विधिप्रत्ययेन विरुद्धत्वाद्देशलक्षणार्थताग्नेश्च पारार्थ्यमुपात्तस्य विरुध्यते। ततोऽयमेव पक्षो न्याय्यः ॥ २ ॥

अन्त......दधाति ॥ ये प्रेतसम्बन्धिनोऽस्य नेदिष्ठाः कनिष्ठप्रथमा इत्युक्ताः। ते सर्वे तस्याग्नेरुत्तरतो युगपदुपविशन्ति। पृथगुपविष्टेष्वश्मभेदः प्राप्नोति। तत्र तस्यां गतावयुक्तम्। अनुच्यमानेऽपि दिग्विशेषे "उत्तरत उपचारः" इति परिभाषितत्वादग्नेरुत्तरत उपविशन्तीति मन्यामहे। अग्निमेतांश्चान्तरेण अग्नेस्तेषां च मध्ये कञ्चिदश्मानं निदधाति ॥ ३ ॥

१. A[2] adds आस्तीर्य २. T and A[1] omit पश्चा...र्य

निदधाति ॥३॥ शम्याः परिधीन् कृत्वा शमीमयमिध्मं पालाशं वारुणेन स्रुवेण

शम्याः......ब्धेषु ॥ शम्या रथशम्या। शकटशम्या वा विशेषाभावादुपादातव्या। परिधीन् कृत्वा परिधिकार्ये ता विनियोज्य तथाभूतस्य कार्यान्तरे उपविष्टत्वाद्वृक्षनियमो नास्ति। अच्छिन्नाग्रता च धर्मो निवर्तते। प्रागेव पलाशैरच्छिन्नाग्रैः शम्या कर्तव्या इति चेत्, नैतदेयम्; न हि शम्यानामुत्पादकमेतद्वाक्यम्; प्रसिद्धानां शम्यानां कार्यान्तरे नियोगः, यथा "परिधौ पशून् नियुञ्जन्ति" इति परिधीन् कृत्वा तद्धर्मक्रियाविरोधिना प्रोक्षणादयः कर्तव्याः; एवं शम्यात्वाविरोधेन पलाशा अच्छिन्नाग्रा यदि लभ्यन्ते ता ग्राह्याः। न ताः सम्पादनीयाः। शमीमयमिध्मं करोति। अश्वत्थादयो वृक्षविशेषा गृह्यप्रोक्ताः सर्वे प्राप्नुवन्ति। पालाशः खादिरो वा इत्यन्येषां शाखिनां तत्र नियमः क्रियते। शमीमय एवेध्मः कर्तव्य इति। "पालाशः खादिरो वा" इति शाखान्तरीये वचन उपसङ्गृह्यमाणे विध्यर्थं वचनमपवादत्वाच्च सामान्यविधिं बाधते। अस्मिन् सति पक्षे प्राप्त्यर्थं पालाशं वेत्युक्तम्। अतः शमीमयेन विकल्पः। शमीमयं वेत्येव सिद्धम्। पालाशः प्रकृतितः प्राप्त इति चेत्, पालाशखादिरयोः प्राप्तयोर्नियमार्थमवश्यं वक्तव्यमेव। पार्णेन वारुणमयेन स्रुवेण कंसेन वोपहननसमर्थेन होमः कर्तव्यः। तत्कार्यापन्नं च कंसं स्रुवधर्माँल्लभते, प्रधानस्यैतत्पात्रम्। अङ्गेषु प्राकृतं पात्रमिति चेत्, तदनुपपन्नमिव, समर्थस्य पात्रस्य विद्यमानत्वात्। कंसेनापि तत्कार्यसिद्धिः। यथाभिचारेषु बाधकं स्रुवमुपाददानां अङ्गार्थमन्यं स्रुवं नोपाददते, प्रधानचोदनत्वादङ्गानाम्; साङ्गस्य प्रधानस्य कर्तव्यतोच्यते। तथा च मन्यमानाः प्रधानेन तुल्यदेशकालकर्तृभावमङ्गानां न्यायविदः समामनन्ति। उपस्थः कृतो येन स उपस्थकृतः। कृतोपस्थेति प्राप्ते आहिताग्निपाठादुपस्थकृत इत्युक्तम्। समन्वारब्धेषु सम्बन्धिषु जुहोति। अन्वारब्धेषु इत्येव सिद्धे समन्वारब्धेषु इति वचनं संस्कर्तारमेव सर्वेऽन्वारभते, न परस्परतः, कुशैर्वेत्येवमर्थम्। समित्येकीभावे सम्यगर्थे वर्तते। तथा च सत्यव्यवहितयोरन्वारम्भः

१. T. उपनिदधाति
२. A. शम्याया विशे
३. A. उपदिष्ट
४. A. समादनीयाः
५. A. लोपः हनन
६. L adds here न्यायविदः... पाठात् occurring later.
७. A. अर्थो
८. A. सत्यवहित

कंसेन वा जुहोतीत्युपस्थकृतः समन्वारब्धेषु ॥४॥ "इमं जीवेभ्यः"

"परैतु मृत्युरमृतं न आगन् वैवस्वतो अभयं नः कृणोतु ।

पर्णं वनस्पतेरिवाभिनश्शीयतां रयिः सचतां नः शचीपतिः ॥"

याश्चारुणेः दशान्वाधान इति "अप नः शोशुचदघम्" इति सप्त "अग्ने नय" "यस्त्वा हृदा" "त्वं नो अग्ने अधरादुदक्तात्" इति द्वादश हुत्वा "यथाहानि"

सम्यक्करो भवति। का पुनरिह होमस्येतिकर्तव्यतेति अगृह्यप्रोक्तस्य। यावदुक्तमिति केचित्—तदनुपपन्नम्; प्रकृतलिङ्गस्य दर्शनात्। प्रकृतमितिकर्तव्यतां सन्निहितामप्यसन्निहितां मन्यामहे। अप्राप्त इध्मो विधीयते इति चेत्, न इध्मविधानार्थमेतद्वचनम्। किं तर्हि? विशेषविधानार्थम्। उभयस्मिन् विधीयमाने वाक्यं भिद्येत, लिङ्गमसाधकम्, प्राप्तिर्वक्तव्येति। सर्वासां चाज्याहुतीनां इति सर्वग्रहणात् प्राप्तम् "परेयिवांसम्" इत्येवमादिष्वपि सर्वग्रहणेन प्राप्नोति इति चेत्, न; त्रेताग्निसम्बन्धात्। एकाग्निविधाने हि सा इतिकर्तव्यता। अग्निमुपसमाधायेति प्रकृतत्वात्त्रेताग्निसमुदाय एव श्मशानाग्निरिति कृत्वा सञ्चयनहोमेऽपि न प्राप्नोति। "अवसृज पुनरग्ने" इत्येतावतैव सिद्धे आहुतीस्तिस्रो जुहोतीति वचनमाहुतिमात्रं यथा क्रियेत, नेतिकर्तव्यता इत्येवमर्थम्। तस्मादिह पाकयज्ञेतिकर्तव्यता भवति ॥ ४ ॥

इम......तूष्णीम् ॥ "इमं जीवेभ्यः" इत्येका, "परैतु मृत्युः" इति शाखान्तरीयत्वात् समस्तपाठ इति। आरुणेराचार्यस्य मते या ऋचोऽग्न्यन्वाधाने पठिताः "अप नश्शोशुचत्" इति सप्त "अग्ने नय" "यस्त्वा हृदा" "त्वं नो अग्ने अधरात्" इति पूर्वाभ्यामृग्भ्यां सह ता द्वादश ऋचः सम्पद्यन्ते। आवापस्थाने ताः प्रधानाहुतीर्हुत्वा। द्वादशग्रहणं शाखान्तरीयमन्त्रसङ्ख्यावज्ञापनार्थम्। अस्माकं तु द्वादशैव इति। हुत्वा प्रधानहोममात्रं कृत्वा प्राक् स्विष्टकृतः सर्वप्रायश्चित्तेभ्यो वा "यथाहान्यनुपूर्वम्" इति द्वाभ्यां दक्षिणमंसमन्वावृत्य प्रदक्षिणमावृत्य सम्बन्धिनः समीक्षन्ते।

१. A[2]. अपैतु
२. T. नु अभयं कृणोतु
३. A[1] and A[2] add स्वाहा
४. A[2] omits अप नः...क्तात् इति
५. A. प्रोक्षस्य
६. L adds यावदुक्तस्य
७. A. प्रकृतस्य
८. A. इत्यादिषु
९. A. समस्त

इति दक्षिणमंसं द्वाभ्यां समीक्ष्याञ्जनं सर्पिषा सन्नीय दर्भपिञ्जूलैः स्त्रीणामक्षीण्यनक्ति "इमा नारीः" इति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥५॥ ब्राह्मणस्य[1] बाहुमन्वारब्धां वा गोर्वा पुच्छमुत्तिष्ठतोऽनुमन्त्रयते "उत्तिष्ठ ब्रह्मणस्पते" इति ॥६॥ अनड्वानहतं वासः कंसश्च दक्षिणा ॥७॥

मन्त्रपृथक्त्वाद्धि समीक्षणम्। अञ्जनं चूर्णीकृत्य सर्पिषा सन्नीय मन्त्रयित्वा[2] दर्भपिञ्जूलैः दर्भाग्रैः स्त्रीणां सम्बन्धनारीणां तत्र तत्र सन्निहितानामक्षीण्यनक्ति। प्रसिद्धवन्निर्देशात्तासामपि तत्र सन्निधानं गम्यते[3]। ततस्ता अप्यन्वारभन्ते। तासामक्षीण्यनक्ति "इमा नारीः" इत्यनयर्चा। सकृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीम्। नारीबहुत्वाद्वीप्सा। एकस्यामपि नार्यामक्षिद्वित्वादुपपद्यते वीप्सा। तस्मात् प्रत्यक्षि त्रिस्त्रिरञ्जनं प्रतिनारि प्रत्यक्षि च मन्त्र आवर्तते, मन्त्रकरणत्वात्। "इमा नारीः" इति मन्त्रार्थानुरोधात् सकृदेव मन्त्रं संस्कर्ता अभिदधाति। युगपत्सर्वा नार्यो मन्त्रान्ते जपन्ति। यथा दक्षिणमक्षि, तथा सव्यमिति केचित्; तदयुक्तम्, एकवचननिर्देशात्। संस्कर्ता अञ्जनक्रियायाः कर्ता। तत्र यौगपद्यमनुपपन्नम्, एकत्वात्। कर्तुरेकत्वाच्च कर्मणामवश्यम्भाविनि क्रमे पूर्वकालस्यैवाञ्जनस्य मन्त्र उपकुर्यात्, नोत्तरकालस्य; प्रधानवशवर्तित्वाच्च गुणानां प्रत्यञ्जनं मन्त्रावृत्तिः न्याय्या। तस्मादन्यायनिगदोऽयमेकवचनस्य स्थाने बहुवचनम् ॥ ५ ॥

ब्राह्म......इति ॥ ब्राह्मणस्यान्यस्य कस्यचिद्बाहुमन्वारभ्य गोःपुच्छं वा सर्वे सुहृद उत्तिष्ठन्ति। तानुत्तिष्ठतः संस्कर्ता "उत्तिष्ठ ब्रह्मणस्पते" इत्यनयर्चा अनुमन्त्रयेत। अन्यकर्तृकत्वादनुमन्त्रणे सकृदेव मन्त्रः ॥ ६ ॥

अन......क्षिणा ॥ अनड्वानहतमनुपयुक्तं वा। कंसश्चानवधृतपरिमाणो दक्षिणा।

"निषेकादीनि कर्माणि श्मशानान्तानि सर्वशः।
यः[4] करोति वृतो यस्य स तस्यर्त्विगिहोच्यते॥"

इति वचनाद्य ऋत्विक् प्रेतस्य पितृमेधं करोति, तस्मै दायादा दद्युः। एवं दक्षिणा-

१. T. ब्राह्मणः
२. L. विभयित्वा
३. A. शक्यते
४. A. यं

दक्षिणातो वा वित्तम् ॥८॥ "नि वर्तध्वम्" इति सूक्तेन प्रत्येनाः प्रदक्षिणमग्निं

शब्द उपपन्नार्थो भवति। दक्षतेरुत्साहकर्मणो दक्षिणाशब्दो निरुच्यते, येन प्रोत्साहितः परकीये कर्मणि परः प्रवर्तते, तद्द्रव्यं दक्षिणाशब्दैर्वाच्यम्। यत्रान्यकर्तृकत्वं नास्ति, तत्रामुष्मै ददातीत्युच्यते। दक्षिणाशब्देन यथाचार्याय वरं ददातीत्याह— "सूर्यां विदुषे वा धूयम्" इत्येवमादिषु। सीमन्तोन्नयनेऽप्यनेनैव न्यायेन कर्तुर्दानं तस्यामश्वां च पुष्टिं च धेनुकं दत्वा इत्यत्रापि दक्षिणाशब्दाभावात् प्रत्यगात्मनि च दानविरोधाददृष्टार्थं वचनमिति मीमांसकैरुक्तम्। दायादोऽपि यदि पुत्रादिः संस्कर्ता सोऽप्यन्योन्यस्मात् तदर्थं लब्धुमर्हतीति नानुपपन्नम्। अदृष्टार्थं दानमन्येभ्यो ब्राह्मणेभ्यो दातव्यमिति केचिन्मन्यन्ते ॥ ७ ॥

दक्षि......वित्तम् ॥ दक्षिणातो दक्षिणाभ्य आगतं यावदुक्ताभिर्दक्षिणाभिः परिक्रयाल्लभ्यन्ते तावद्वित्तं दद्यात्। चोदितस्य द्रव्यस्यालाभे तत्परिमाणं द्रव्यं तद्बुद्धया दातव्यम्। न्यायो ह्ययं न वचनम् [वाचनिकम्]; वचने सत्यदृष्टं कल्पयितव्यम्। श्रुतद्रव्यापचारे च प्रतिनिधिरुपादातव्यः। तत्र सुसदृशे प्राप्तेऽपि सदृशं नियम्यते, यथा सोमाभावे पूतीकानभिषुणुयादिति। अर्घपरिमाणसादृश्यं च सादृश्यमेव। आकारादिसादृश्याद्दक्षिणाविषयेऽर्घपरिमाणसादृश्यमेव बलवत्तरमिति ज्ञाप्यते। प्रोत्साहनार्थत्वाच्च दक्षिणान्तरमुपपद्यते। आकारसादृश्ये च कर्ता न प्रोत्साहेदिति च ॥ ८ ॥

नि व......र्येति ॥ प्रत्येन इति संस्कर्तुराख्या। प्रतिष्ठितमेनोऽस्मिन्निति प्रत्येनाः। पितृमेधकर्मणि यदि प्रमाद्यति तत्कर्तारमेव गच्छति, न प्रेतम्। इतरत्र उभयोर्दोषो भवति, यश्च करोति यस्मै च क्रियते। इह पुनः संस्कर्तुर्दोषः, न प्रेतस्य, अचेतनत्वात् प्रयोजकत्वासामर्थ्यात्। "निवर्त्य[र्तध्व]म्" इत्यनेन सूक्तेन संस्कर्ता प्रदक्षिणं त्रिर्दक्षिणां पर्येति। कृत्वसुजर्थचोदनायां कर्मावृत्तौ मन्त्रावृत्तिर्नास्ति। अभ्यासगुणविशिष्टमेवैतत् कर्मेति सूत्रव्याख्यायामुक्तम्। तस्मान्मन्त्रान्ते त्रिः परिगमनं करोति। मन्त्रलिङ्गाद् दक्षिणां त्रिः पर्येति; नान्यदिति ॥ ९ ॥

१. A[1] and A[2]. प्रत्येनां
२. L. दक्षिणतेः
३. L. विरोधाददृष्टार्थवचनानतस्य
४. A. इत्थं
५. L. दक्षिणतः

 परिधिकर्म



प्रदक्षिणं त्रिः पर्येति ॥९॥ प्रत्येनसि परिधिकर्म ॥१०॥ एष एव वानाहिताग्नेः

प्रत्ये... ..कर्म ॥ प्रत्येनसि संस्कर्तरि परिधिकर्म । प्रतिष्ठितस्तस्योपकारकं न प्रेतसंस्कारार्थं श्राद्धपर्यवसानमित्येनत् परिज्ञातं भवति । परिधिकर्मण्यकृते संस्कर्तुरेव दोषो भवति, न प्रेतस्येति ज्ञापनाय प्रत्येनसीत्युक्तम् । ननु च—संस्कारप्रमादोऽपि कर्तुरेव दोषः, न प्रेतस्याचेतनस्य । एवमेतत्संस्कारैकदेशे प्रमादे पुनः कर्मणः प्राप्तिर्न विद्यते परिधिकर्मप्रमादे दूरस्थेनापि प्रायश्चित्तं कृत्वा पुनः क्रियेत । अथ च—अफलमिदं कर्म, परार्थत्वात् सिद्ध्यर्थमिति ज्ञात्वा कर्माणि कर्तव्यानि । तथर्त्विजामपि । सति व्यपदेशे फलावाप्तिर्भवतीति मीमांसकैरभ्युपगतः । तस्मादाचार्येणाप्यध्वर्युं मृतमिच्छन् अध्वर्युरिति स न्यायः सूचितः ॥ १० ॥

एष. ....कल्पः ॥ एतेनैव दहनविधानेनानाहिताग्नेः दहनकल्पो व्याख्यातः । एतत् प्रकृतिकर्म । अथ यत् स्वैरग्निभिर्यजमानं संस्कुर्वन्ति, आहिताग्निमुरीकृत्य दहनकल्पो व्याख्यातः । नास्माकमत्र वचनान्तरमस्ति । अनाहिताग्नेरपि दहनविधिरस्तीति आचार्यवचनान्मन्तव्यः । यथा तेनैव धर्मेणाहिताग्नेः पिण्डपितृयज्ञः क्रियेतेस्याचार्येणातिदिश्यते, "अप्यनाहिताग्निना कार्यम्" इति श्रुतिवचनमपि मीमांसका उदाहरन्ति, तत्र तन्मूलता आचार्यस्य वचनस्यावसिता, इहापि तेनैव न्यायेनाध्यवसेया श्रुतिमूलता । "नैञिव युक्तमन्यसदृशे तथा ह्यर्थ[ह्यर्थगतिः]"इत्यनेन न्यायेनाधानमात्रशून्यः साधुर्गृहस्थः पञ्चमहायज्ञेषु चरितोऽनाहिताग्निरुच्यते । यथा 'ब्राह्मणमानय' इत्युक्ते न माणवकमानयति "उपनयनप्रभृति" इत्युपलब्धजातिविशेषत्वात्, शूद्रत्वस्य च प्रागुपनयादनिवृत्तत्वात्, यस्यैवोपासनं स एवाम्नातपितृमेधसंस्कारमर्हतीत्येके मन्यन्ते । सर्वथा अनुपनीतानां अप्रत्तानां च कन्यानामभावः । अनुपनीतस्थानीया हि कन्या । "पाणिग्रहविधिः स्त्रीणामौपनायनिको विधिः" इति वचनात् कन्यानामनुपनीतानां चैकर्चविधानादयो दहनकल्पा अन्याचार्यप्रोक्ता भवितुमर्हन्ति ॥

१. L omits अपि प्रायश्चित्तं

२. A. न च युक्त

३. A. अपृक्तानां

कल्पः ॥११॥ राजगवीमामिक्षामुल्मुकमुद्धृत्य सर्वमन्यत्समानम् सर्वमन्यत्समानम् ॥१२॥

इति कौषीतकगृह्यस्य पञ्चमोऽध्यायः ॥

कौषीतकगृह्यश्च समाप्तः ॥

राज......मानम् ॥ तत्प्रकृतित्वात् सर्वकर्मप्रयोगे प्राप्ते इदमुच्यते । राजगवीमामिक्षामुल्मुकं चोद्धरेदिति द्रव्योद्धरणचोदनायां द्रव्यप्रयोजनोद्धरणमविकृतं बोद्धव्यम्, प्रयोजनार्थत्वाद् द्रव्याणाम्; द्रव्ये चोद्धृते वचनेन तन्निर्वर्त्यं प्रयोजनं निर्वर्तते । यथा "पत्न्यन्वास्ते"इत्युक्ते पत्नीकार्यमाज्यावेक्षणादि निवर्तते । [2]यत्र पुनरभावात् द्रव्यस्योद्धरणं तत्र तस्मिन् द्रव्ये विद्यमाने "यत्सामान्यतमं मन्येत" इत्येतेन न्यायेन प्रतिनिधिमुपानीय प्रयोजनं निर्वर्तयति । यत्पुनरर्थयुक्तं तन्न्यायेनैव निवर्तते; न तत्र वचनेन प्रयोजनमर्थलुप्तान्यकथितानि । तस्मात् पात्रचयात् इत्यर्थलुप्तानि निवर्तन्ते, प्रतिपत्तिकर्मत्वात्तेषाम् । प्रतिपत्त्य[पाद्या]भावे हि प्रतिपत्तिरुपपद्यते। एष एवानाहिताग्नेः कल्प इत्येव सिद्धे सर्वमन्यत्समानमिति शाखान्तरीयोपसङ्ग्रहार्थं वचनम् । शाखान्तरप्रोक्ता अपि विशेषा अविरुद्धा यावदुत्साहमुपसङ्ग्राह्याः । अनित्यत्वादाचार्येण प्रतिकर्म न विहितम् । तस्मादकरणेऽपि दोषाभाव इति ॥ १२ ॥

इति पञ्चमोऽध्यायः ॥

कौषीतकिगृह्यवृत्तिः समाप्ता ॥

---

१. T. स्नुक

२. A omits यत्र पुनः

३. A. अर्थकृतं

# INDEX OF SŪTRAS

ह



---

# INDEX OF ŚRUTI CITATIONS IN THE TEXT.



१. The Mantra is cited in full.

२. In the first citation the Mantra is fully cited; in the second, only the pratika has been cited.

# INDEX OF ŚRUTI CITATIONS IN THE TEXT



१. The Mantra is cited in full.

| Citation. | Ref. | Source. |
|---|---|---|
| ¹अमोऽसि प्राण | ३–५–२ | Sāma Mantra Brāhmaṇa II, i, 14; Āśvalāyana Śrauta Sūtra II, ix, 10. |
| ¹अमोऽहमस्मि सा त्वं | १–८–१८ | A. V. XIV, ii, 71; K. S. XXXV, 18; Aitareya Brāhmaṇa VIII, xxvii, 4. |
| ¹अयं वै त्वमस्मात् | ५–३–२६ | cf. Jaiminīya Brāhmaṇa I, 47; T. A. II, i, 4; Śāṅkhāyana Śrauta IV, xiv, 36. |
| अयमूर्जावतः | १–१४–८ | Sāma Mantra Brāhmaṇa I, v, 1. |
| ¹अयमोदनः | ५–७–२ | |
| अयाश्चाग्ने | १–५–२९ | M. S. I, iv, 3, etc; K. S. V, 4 etc. |
| ¹अरण्यं मा ग्रामाय | ३–४–२ | |
| अरिष्टा अस्माकं | ३–३–१ | Āśvalāyana Śrauta Sūtra III, xi, 6 etc. |
| ¹अर्यमणं नु देवं | १–११–४ | Āśvalāyana Gṛhya Sūtra I, vii, 13 etc. |
| अव सृज पुनरग्ने | ५–५–४ | R. V. X, 16, 5. |
| अश्मन्वतीः | १–९–१५; ५–४–६ | R. V. X, 53, 8. |
| अश्वयुग्भ्यां स्वाहा | ४–३–२ | T. B. III, i, 5, 13. |
| अश्विभ्यां स्वाहा | ४–३–२ | Aitareya Brāhmaṇa, VII, ix, 2; T. B. III, i, 5, 13. |
| ¹अस्यां देवानां | ३–२–१ | |
| अस्योपसद्ये | ३–४–५ | Kauśika G. Sūtra 89, 13. |
| अहश्चरेभ्यो नमः | ३–१०–१८ | |
| अहोरात्रे | ३–२–१२ | |

१. The Mantras are cited in full.

# INDEX OF ŚRUTI CITATIONS IN THE TEXT



१. In the second place where this Mantra is cited, it is cited in full, whereas in the first instance only the pratika is found.

२. The Mantra is cited in full.

१. The Mantra is cited in full.

१. **The Mantra is cited in full.**

## INDEX OF ŚRUTI CITATIONS IN THE TEXT



१. The Mantra is cited in full.

२. In the second citation alone is this Mantra fully cited.

१. The Mantra is cited in full.

| Citation. | Ref. | Source. |
|---|---|---|
| त्यं चिदश्वम् | १–४–३; ९–१३ | R. V. X, 143, 2. |
| त्वं तम् | २–७–२७ | R. V. I, 18, 5. |
| त्वं नः पश्चात् | १–५–२९ | R. V. VIII, 61, 16. |
| त्वं नो अग्ने | १–५–२९; ५–८–५ | R. V. IV, i, 4. |
| त्वमग्ने प्रमतिः | १–५–१७ | R. V. I, 31, 10. |
| त्वमग्ने व्रतभृत् | २–८–६ | Aitareya Brāhmaṇa VII, viii, 1; T. B. II, iv, 1, 11. |
| दधिक्राव्णो अकारिषं | १–१०–१४; ३–७–१२ | R. V. IV, 39, 6. |
| दिव्यानां सर्पाणामधिपतये स्वाहा | ४–२–२ | |
| दिव्यानां सर्पाणामधिपतिः प्रलिखताम् | ४–२–३ | |
| दिव्यानां सर्पाणामधिपतिरनुलिम्पताम् | ४–२–३ | |
| दिव्यानां सर्पाणामधिपतिराच्छाद्यतां | ४–२–३ | |
| दिव्यानां सर्पाणामधिपतिराङ्क्तां | ४–२–३ | |
| दिव्यानां सर्पाणामधिपतिरीक्षताम् | ४–२–३ | |
| दिव्यानां सर्पाणामधिपतिरुन्नीयताम् | ४–२–३ | |
| दिव्यानां सर्पाणामधिपतिस्सुमनस्यताम् | ४–२–३ | |
| दिव्याः सर्पाः प्रलिखन्ताम् | ४–२–३ | |
| दिव्याः सर्पाः अनुलिम्पन्ताम् | ४–२–३ | |
| दिव्याः सर्पाः आच्छाद्यन्ताम् | ४–२–३ | |
| दिव्याः सर्पाः आङ्क्ताम् | ४–२–३ | |
| दिव्याः सर्पाः ईक्षन्ताम् | ४–२–३ | |
| दिव्याः सर्पाः उन्नीयन्ताम् | ४–२–३ | |
| दिव्याः सर्पाः सुमनस्यन्ताम् | ४–२–३ | |
| दिव्येभ्यः सर्पेभ्यः स्वाहा | ४–२–२ | |
| दृतेरिव ते | २–३–११ | R. V. VI, 48, 18. |
| देवस्य त्वा सवितुः | २–२–७ | cf. Āpastamba Mantra-pāṭha II, iii, 24. |
| देवस्य सवितुः | ५–३–३० | T. A. VI, iii, 2. |

१. The Mantra is cited in full.

# INDEX OF ŚRUTI CITATIONS IN THE TEXT

| Citation. | Ref. | Source. |
|---|---|---|
| निवर्तध्वम् | ५-८-९ | R. V. X, 19, 1. |
| नीललोहितम् | १-८-८ | R. V. X, 85, 28. |
| नेजमेष परापत | १-१४-६; १० | R. V. Khila X, 184, 1. |
| परि पूषा | ३-५-५ | R. V. VI, 54, 11. |
| परि[१] वपस्वेदं | ३-५-४ | |
| परेयिवांसं | ५-१-७ | R. V. X, 14, 1. |
| परैतु[१] मृत्युः | ५-८-५ | A. V. XVIII, iii, 62. |
| पवित्रे स्थः | १-४-१ | V. S. I, 12. |
| पशुपतये स्वाहा | ४-३-२ | Ṣaḍviṁśa Brāhmaṇa V, 11. |
| पिङ्गलाय स्वाहा | ४-३-२ | |
| पिबतं च तृप्णुतं च | १-१०-१४ | R. V. VIII, 35, 10. |
| पिशङ्गरूपः | १-१२-८ | R. V. II, 3, 9. |
| पुंसि[१] वै पुरुषः | १-१२-६ | cf. A. V. VI, 11, 2. |
| पुंसुवतीह भव | १-१०-१० | |
| पुमांसौ मित्रावरुणौ | १-१०-२४ | Sāma Mantra Brāhmaṇa I, iv, 8. |
| पूषणं[१] नु देवं | १-११-४ | Sāma Mantra Brāhmaṇa I, ii, 4. |
| पूषा गा अन्वेतु नः | ३-५-४; ६-२ | R. V. VI, 54, 5. |
| पूषा त्वेतश्च्यावयतु | ५-२-६ | R. V. X, 17, 3. |
| पृथिवीं शंभुवा ह | ३-३-१ | |
| पौर्णमास्यै स्वाहा | ४-२-१ | T. B. III, i, 4, 15. |
| प्रजापतये[१] त्वा | ३-५-१ | cf. Ās. Śrauta II, ix, 9. |
| प्रजापतये स्वाहा | ३-१०-४ | V. S. XVIII, 28 etc; T. S. III, iv, 2, 1 etc; K. S. XIII, 11 etc. |
| प्रजापतिर्व्यधात्[१] | १-१२-६ | |
| प्रजापते | १-८-२७; ११-४; १४-६ | R. V. X, 121, 10. |
| प्रजास्त्वयि[१] दधामि | १-२-३ | |

१. The Mantra is cited in full.

# INDEX OF ŚRUTI CITATIONS IN THE TEXT

| Citation. | Ref. | Source. |
|---|---|---|
| प्रतिचक्ष्व | ३-७-१० | R. V. VII, 104, 25. |
| प्रति पशुषु प्रतितिष्ठाम्यन्ने | ४-४-१२ | |
| प्रति प्रजायां प्रतितिष्ठामि पुष्टौ | ४-४-१५ | |
| प्रति प्रजायां प्रतितिष्ठामि यज्ञे | ४-४-११ | |
| [1]प्र ते यच्छामि | १-१६-७ | |
| प्रत्यप्सु प्रति तिष्ठाम्यमृते | ४-४-१४ | |
| प्रत्यश्वेषु प्रति तिष्ठामि क्षत्रे | ४-४-१३ | cf. V. S. XX, 10; M. S. III, xi, 8; K. S. XXXVIII, 4. |
| प्र त्वा मुञ्चामि | १-९-१ | R. V. X, 85, 24. |
| प्राणानां ग्रन्थिरसि | ३-५-२ | T. A. X, 37, 1. |
| [1]प्राणापान उरुव्यचाः | २-८-९ | |
| प्राणापानयोः | २-८-८ | |
| प्राणे ते रेतो दधामि | १-१२-३ | |
| बलं चोर्जं च | ३-२-८ | |
| [1]बृहस्पतये त्वा मह्यं | १-८-१३ | cf. V. S. VII, 47; M. S. I, ix, 4. |
| ब्रह्म च क्षत्रं च | ३-२-९ | cf. A. V. IX, vii, 9. |
| ब्रह्मचार्यसि समिधं | २-२-१५ | cf. Śatapatha Brāhmaṇa XI, v, 4, 5. |
| ब्रह्मणाग्निस्संविदानः | १-१३-२ | R. V. X, 162, 1. |
| भगस्ते हस्तमग्रभीत् | २-२-११ | A. V. XIV, i, 51. |
| भद्रं कर्णेभिः | ३-५-३ | R. V. I, 89, 8. |
| भद्रान्न श्रेयः | ३-५-१ | T. S. V, vii, 2, 4 etc; K. S. XIII, 15. |
| भरद्वाज धान्वन्तरये स्वाहा | ३-१०-४ | |
| [1]भुवनमसि | ३-५-९ | cf. M. S. IV, ii, 9. |
| भूर्ऋग्वेदं त्वयि | १-१६-१६ | |
| भूर्भुवस्सुवः | १-४-१ | T. S. I, vi, 22 etc. |
| भूर्भुवस्स्वः | १-५-२९; ८-१९; १४-७ | V. S. III, 5 etc. |

१. The Mantra is cited in full.

१. The Mantra is cited in full.

# INDEX OF ŚRUTI CITATIONS IN THE TEXT



१. The Mantra is cited in full.

१. The Mantra is cited in full.

## INDEX OF ŚRUTI CITATIONS IN THE TEXT



१. This Mantra is cited in full.

---

१. The Mantra is cited in full.

# INDEX OF OTHER CITATIONS IN THE TEXT



१. There are a few differences in the reading.

# INDEX OF CITATIONS IN THE COMMENTARY.

---

# READINGS IN THE TRIVANDRUM Ms.

| P. | L. | Printed | TM. |
|---|---|---|---|
| 2, | 5. | वैर्गद्वयम् | Same as in A[1] and IO. |
| 3, | 4. | ऋचः | ऋचश्च |
| | 13–4. | उच्चैर्न्या...वेदः | "उच्चैर्न्या...वेदः" This is the correct reading. |
| 4, | 2. | चूळाकरणे | Same as in T. |
| 5, | 2. | ह्रुत्य | Same as in IO. |
| | | प्रोक्ष्य | प्रोक्षिते |
| | 3. | जाया | या |
| 6, | 2. | अभ्यात्मं | अध्यात्मं |
| 8, | 3–4. | अभि...ञ्जसा | अभिशस्त्यनभिशस्तिपा अनभिशस्तेऽन्यमञ्जसा |
| | 5. | मूर्ध्नि | Same as in IO. |
| 9, | 5. | तामभ्युक्ष्य | ता अभ्युक्ष्य |
| 11, | 4. | | The sūtra दक्षिणं...स्तृणाति is omitted. |
| 12, | 2. | | At the beginning of sūtra 10 add अथ पश्चात् |
| 15, | 2. | प्रदक्षिण | प्रदक्षिणं |
| 16, | 2. | प्रत्यस्य | प्रत्यस्यति |
| 20, | 2. | स्रुवम्ं | Same as in A, T. and L. |
| 21, | 2. | स्थालीपाके | सस्थालीपाके |
| 22, | 3. | स्विष्टकृतः | सकृत् स्विष्टकृतः This is the correct reading. |
| 23, | 3. | हविषि | हविषी |
| 24, | 2. | आर्पः | Same as in A[2]. |
| | | तमसस्पंरि | Same as in A[2]. |
| | 6. | अद्याद्याश्वश्वः | अद्याश्वश्वः |
| 25, | 4. | मध्यमं | मध्यं |
| | 5. | नित्ये | नित्ये ते |
| | 6. | व्युदुक्षति | भ्युदुक्षति |
| | 7. | प्राचीं | Same as in T. |

| P. | L. | Printed | TM. |
|---|---|---|---|
| 29, | 4. | चारिकंम् | Same as in T. |
| | 7. | रात्रीं | रात्रिं |
| | | वह्निष्यन्ति | वरिष्यन्ति |
| | 8. | काले…त्तमैः | काले सुरभिगन्धैः फलोत्तरैः |
| 30, | 2. | परिधाप्य | परिधाय |
| 31, | 2. | अविधवाः | अविधवाभिः |
| 33, | 2. | रक्त | रक्तं |
| | | त्रिमर्णि | पात्रमर्णि |
| 34, | 3. | मैह्यं | Same as A1, A2 and T. |
| 36, | 5. | द्यौरहं | Same as in A2. |
| | 6. | तावेव | तावेह |
| 37, | 6. | प्रदक्षिणं…मन्त्रेण | This passage is omitted. |
| | 8. | धारणे | धारण |
| 38, | 2. | क्रमणाद्येवं | क्रमणादेवं |
| | 3. | त्वदेतानि | Same as in T. |
| 39, | 5. | मूर्ध्नि | मूर्धनि |
| | 6. | ददाति | ददानि |
| 42, | 3. | शम्याकत्रेषु | शम्याकर्तेषु |
| | | निधाय | Same as in A2. |
| | 5. | रोहन्त्यां | रोहत्यां |
| 43, | 7. | ,, | ,, |
| | | तरन्त्यां | तरत्यां |
| 44, | 2. | प्रजयां | Same as in A2 and T. |
| | 5. | दर्भेष्वन्वा | दर्भेषु वान्वा |
| | 8. | यजुर्वेदेन वेदानां | This is omitted here. |
| 45, | 5. | आभुवत् | This is omitted here. |
| 46, | 5. | भव | भवति |
| 47, | 2. | मयि[1] | Same as in A2. मह्यं त्वादाद्बृहस्पतिः । मया पत्या प्रजापती[वती] सं जीव शरदः शतम् ॥ |

| P. | L. | Printed | TM. |
|---|---|---|---|
| | | इति at the end of the line. | This is omitted here. |
| 48, | 5. | वरुणौ | वरुणा |
| 50, | 14. | पेषयति | पेषयित्वा |
| 51, | 3. | प्रजनिष्यमाणः | प्रजनयिष्यमाणः |
| | 10. | पिपृहि...मि च | बिभृहि जातानां जनयानि च |
| | 11. | पुमांस्त्वं | पुमांसं |
| | 12. | अनुसिञ्चतु | अनुषिञ्चतु |
| 52, | 5. | स्त्रीषु यमन्यान् | स्त्रीयूषमधान् |
| | | पुमांस्त्वमददात् | पुमांसमदधात् |
| | 8. | भिष्ठं | भिष्यं |
| | 12. | पिपृहि | Same as in A². |
| | 14. | पुंसुवनम् | Same as in T, A¹ and A². |
| 53, | 2. | कुशदण्डकं | कुशकण्टकं |
| | | संस्थिते | Same as in A². |
| | 3. | जुह्वः | जुहत् |
| | 6. | | This is not treated as a separate Khaṇḍa. |
| 54. | 2. | | This is not treated as a separate Khaṇḍa. |
| 55. | 2, | षष्ठी | षष्ठीम् |
| | 6. | वा वीरतरः | वापीतरः |
| | 7. | नेजमेष परापत | This is omitted as in IO and A². |
| | | षळृचेन | षळर्चेन |
| 56, | 2. | मृशेत् | स्पृशेत् |
| | 4. | बृहद्रथन्तरे पक्षौ | Same as in A². |
| | 7. | कालकीतकस्य | कालक्लीतकस्य |
| | 8. | देशे यस्मिन् | Same as in IO. |
| 57, | 5. | च | This is omitted. |
| | 6. | कृष्य | घृष्य |

| P. | L. | Printed | TM. |
|---|---|---|---|
| 58, | 3. | आयुष्मान् | आयुष्मन् |
| | 4. | प्रब्रूयात् | Same as in A2 and L. |
| | 5. | अयुग्मवददन्त्यं | अयुग्ममदन्त्यं |
| 59, | 2. | तद्धितान्तं | तद्धितं |
| | 4. | लोहितानि | रोहितानि |
| | 5. | प्राशयेदिति | प्रशयेदिति च |
| 60, | 5. | मन्त्रयीत | मन्तयते |
| 63, | 5. | कृत्वा | Same as in A2. |
| | | जन्मतिथिं | This is omitted |
| | 6. | गृह्या...ह्वोति | गृह्येऽग्नौ जुहोति करोति |
| 65, | 4. | मात्स्यं | मात्स्यान् |
| | 5. | मैष्वो...स्य | Same as in A1 and T. |
| 68, | 3. | स्वस्तीः | स्वस्ति |
| 71, | 2. | सोमस्य | Same as in A1 and A2. |
| | 5. | कुशतरुणं च | This is omitted. |
| | 7. | यच्चूळाकर्म | This is omitted. |
| 75, | 4. | केशान्तिकः | कैशान्तिकः |
| | 5. | नयेत्तु | नयेस्तु |
| 76, | 3. | तिष्ठतः | तिष्ठते |
| 77, | 2. | त्रिवृता | त्रिवृतां |
| | | रेकः | रेके |
| | 4. | त्वा | Same as in A2. |
| 79, | 9. | श्लोकाय | श्लोक्याय |
| 80, | 3. | पर्यावृत्याथ | पर्यावृत्य दक्षिणेनाथ |
| | 6. | दक्षिणेन प्रादेशेन | This is omitted. |
| 82, | 4. | स्थोर्जा | स्थ ऊर्जा |
| 84, | 5. | वहेत् | वह |
| | 7. | अनुब्रूयात् | This is omitted. |
| 87, | 3. | सूक्तादौ | सूक्तात् |

| P. | L. | Printed | TM. |
|---|---|---|---|
| 88, | 2. | समा ते | समाते |
| | | मूलकुण्डं | मूले कुण्डं |
| | 5. | ब्रह्मा। वेदाः। | In cases like these add either तृप्यतु or तृप्येतां or तृप्यन्तु according as the subject is singular, dual or plural. |
| | 6. | च | Same as in T. |
| | | वषट्कारः | This is omitted. |
| | 7. | सांख्याः | सन्ध्याः |
| | 8. | नद्यः | This is omitted. |
| | 9. | रक्षांसि | रक्षः |
| 89, | 2. | अथ निवीतीभूत्वा | Same as in all except IO. |
| | 4. | महासूक्ताः | This is omitted. |
| | 6. | अथ संवीतीभूत्वा | Same as in all except IO. |
| | 7. | प्रज्ञां तर्पयामि | This is omitted. |
| 90, | 4. | माण्डूकेयाः | As in other casses तृप्यन्तु is not added here. |
| | 6. | महाकौषीतकं | This is omitted. |
| | 7. | पैङ्ग्यं...वकं | शाम्बवकं is read before पैङ्ग्यं |
| | | महाशाम्बवकं | This is omitted. |
| | 8. | बाष्कलं | Add before this:—कौषीतकं तर्पयामि। महाकौषीतकं तर्पयामि॥ |
| | | सुजातवक्त्रं | This is omitted. |
| | | औदवाहिं | औदवाहं सौजामिं तर्पयामि |
| | 10. | प्रति पुरुषं पितरः | पितामहस्तृप्यतु। प्रपितामहस्तृप्यतु॥ |
| 91, | 2. | कहोळः | This is read along with the next word thus—कहोळः कौषीतकिस्तृप्यतु. |
| | 8. | अर्धास्तमिते मण्डले | This is omitted. |
| 92, | 5. | आहारिषं | Same as in T. |
| | 7. | तया...धीमहि | This is omitted. |

| P. | L. | Printed | TM. |
|---|---|---|---|
| 93, | 3. | च विनिपातं | चाविनिपातं |
| | 6. | तदपि | तदभि |
| | 8. | काष्मर्यः | कष्मर्यः |
| | 9. | वान्यानि | वान्यत्न |
| | 10. | वर्णाश्च | पर्णाश्च |
| 97, | 2. | च | Same as in IO and A[1]. |
| | 3. | चरित | Same as in IO and T. |
| | | शंयुबार्हस्पत्य | Same as in A[2]. |
| | 6. | तास्त्वेनं | Same as in IO. |
| 98, | 3. | स्थिते | स्थितो |
| | | मुखं त्विः | This is omitted. |
| | | उपरिष्टात् | उपशिष्टाः |
| | 6. | विशन्ति | दिशन्ति |
| | 7. | | The reading suggested within brackets is found here. |
| 99, | 2. | श्याम | श्याव |
| | 5. | एवं | एव |
| 100, | 6. | प्रायश्चित्तिः | प्रायश्चित्तं |
| 101, | 2. | मेखला त्रयते | This is omitted. |
| 102, | 3. | प्राणापान | प्राणापाना |
| | 4 | समामृत | समामृध |
| 103, | 6. | अपिनह्य | अविनह्य |
| 104, | 2. | वीङ्गङ्गः | पीङ्गङ्गः |
| | 3. | इति | इति द्वाभ्यां |
| | 6. | वस्त्रयुगं | वस्त्रयुग्मं |
| 105, | 3. | विशः प्रति | विशं परि |
| | 5. | इतः | इतीतः Same as in A[2]. |
| | 6. | नु | न Same as in A[2]. |
| | 7. | गर्तान् | कर्तान् |
| | 8. | शाखां | धारां |
| | 10. | गर्ते | कर्ते |

| P. | L. | Printed | TM. |
|---|---|---|---|
| 106, | 2. | | The portion within brackets is omitted here too. |
| | 4. | उत्तरतः | उत्तरे |
| | | द्वयोः | द्वयोर्द्वयोः |
| | 8. | प्रतितिष्ठति | प्रतितिष्ठतु Same as in L. |
| | 9. | तिल्विलेवास्या इरावतीं | तिल्यलेपास्थादिरावती |
| | | पोषस्व | पोषस्य |
| | 10. | तिष्ठन्तीं | तिष्ठन्ती Same as in T. |
| | 11. | बृहस्पति | बृहस्पति |
| 107, | 5. | पिधाने | विधाने |
| 108, | 5. | सेन्चि | षेन्चि |
| | 6. | इत्यपिधाय | इत्यभिमन्त्र्य |
| 109, | 4. | जायया सह धान्याः | जायां च सहधन्यः |
| | 5. | प्रपद्ये | प्रतिपद्ये |
| | | सह प्रजया | Omit सह |
| | 6. | किञ्चास्ति | किञ्चिदस्ति |
| | | शिवं क्षेमाय | शिवमिति क्षेमाय |
| 110, | 4. | महायमाय | महायमा |
| | 5. | महायमाय | महाय |
| | 8. | संविशेयं | सुविशेयं |
| 111, | 2. | प्रवत्स्यन् | प्रपथ्यान् |
| | 4. | अविद्वतान् | अवीभूतान् |
| | 5. | गृहान् समीक्षते | This is omitted. Same as in A². |
| | 7. | सुमनसा | सुमनाः |
| | 8–9. | यो नस्य...अजावयः | This is omitted. |
| | 9. | उपसद्ये | उपपद्ये |
| | 9–10. | दधातु नः | दधनः |
| 112, | 3–4. | इन्द्रा...देवेभ्यः | This is omitted. |
| | 6. | वशेन | वसेन |
| | 9. | ब्रवीम्यमोऽसि | ब्रवीम्यमासि |

| P. | L. | Printed | TM. |
|---|---|---|---|
| 113, | 3. | उपस्थाय | It seems that the khaṇḍa ends with this here. |
| | 4. | समा स्थ | समा स्वस्थ |
| | | रक्षो | अक्षो |
| | 6. | बिलं | विधं |
| | 8. | इति | इति च |
| | 9. | यासु | या तु This is the correct reading. |
| 114, | 2. | या | This is omitted. |
| | 4. | अक्षतं | ईक्षतं |
| | | विराळन्नं गोपायति | बिलादन्नं गोपाययते |
| | 9. | कृत्वा | हुत्वा |
| | 10. | दीधरत् | दीधरन् |
| 115, | 3. | रोहितः | लोहितः |
| | 6. | परि वः | पतिं वः |
| | | चरत | शरदं |
| | 7. | मानश्शास | मनस्यास |
| | | समिषा | समिष्व |
| 116, | 2. | नम्यस्थे | नाम्यस्थे |
| | 7. | काद्याः । अध्यायाया- | काध्याया |
| 117, | 3. | तदब्रवीत् | This is omitted. |
| | 4. | शकुने भद्रमावद | This is omitted. |
| | | जमदग्निना | This is omitted. |
| | 4–5. | धामन्ते...भितं | This is omitted. |
| | 5. | यशे...सुशमि | This is omitted. |
| | | अरणः | This is omitted. |
| | 6. | मरुत्सखा | This is omitted. |
| | | ह्रपृचाः | दृष्टचाः |
| 118, | 2. | च | This is omitted. |
| 121, | 3. | वर्षति | प्रावर्षति |

| P. | L. | Printed | TM. |
|---|---|---|---|
| 121, | 4. | बाणशब्दे | बाणशब्दे च |
| | 5. | क्रन्दत्याम् | क्रन्दति |
| 122, | 2. | आर्तौ | आर्त्यो |
| | 3. | उत्सादने | आच्छादने |
| 123, | 2. | एतेषां यदि किञ्चिदकार्मं | एतेषां कारणानां यदि किञ्चत्कारणं |
| | 4. | च | This is omitted. |
| 124, | 2. | एवावर्तयेत् | एवं वर्तयेत् |
| 126, | 5. | सर्वाभ्यो देवताभ्यः स्वाहा | This is omitted. |
| 127, | 3. | वारुण्येभ्यः | वारुणेभ्यः |
| 128, | 6. | अनुगुप्ते | अगुप्ते |
| 129, | 6. | बालान् स्थविरान् | बालस्थविरान् |
| 130, | 6. | अर्घ्याणां | चार्घ्याणां |
| 132, | 7. | भागार्थं | भोगार्थं |
| 133, | 7. | समेत्य श्रोत्रि | समेत्याश्रोत्रि |
| | 8. | प्रेष्य.....धाय | This is omitted. |
| 134, | 3. | नावृतः | अवृतः |
| | 4. | धर्मार्थे | धर्मे |
| | 5. | अकुलं कुलः | अकुकुलः |
| | | नैतिह्यः | ह इति राजा करोति। इति ह भोजवर्गः। इति हो नित्याप्रियः This is found in the commentary in other manuscripts. |
| 135, | 2. | न निष्ठीवेत् | This is omitted. |
| | 6. | | नापि The reading within brackets is found here. |
| | 7. | अप्लुत्योदकः | आप्लुत्याप्युदकः |
| 136, | 2. | अनातम् | अनवातम् |
| 136, | 6. | याजनमध्यापनं | याजनाध्यापनं |
| 137, | 2. | असंसिद्ध | असंसिध्य |

| P. | L. | Printed | TM. |
|---|---|---|---|
| 138, | 2. | पूर्वापररात्रेषु | पूर्वरात्रेषु |
| 139, | 2. | कुले जातः | कुलेऽस्मिन् जातः |
| 140, | 2. | महयन्ति च सर्वत्र | This is omitted. |
| | 5. | एधिष्येते | एधिष्यतः |
| 141, | 2. | च | This is omitted. |
| | 3. | नाप्राप्यं | नाप्राप्तं |
| | 5. | ब्रह्म | This is omitted. |
| 142, | 2. | तेन | This is omitted. |
| | 3. | धृतिमान् | रयिमान् |
| | 4. | श्रुतवान् | धृतिमान् Same as in A². |
| | 10–11. | तमृचः...मस्मि | This is omitted. |
| 143, | 5. | दीपानां | दीपस्थालीपाकानाम् |
| 144, | 6. | पित्रे | नदीनां पतये |
| 145, | 3. | वासिष्ठं | वासिष्ठसूक्तं |
| | | सूक्तं | This is omitted. |
| 146, | 2–3. | अपावेतत्ते | अपेतत्तेऽन्नं |
| | 4. | पावमानीः | पावमान्यः |
| 147, | 3. | गन्ध | जलगन्ध |
| 149, | 3. | स्वाहा | This is omitted. Same as in A². |
| | 8. | अर्धमासांश्च मासांश्च | अर्धमासाश्च मासाश्च |
| 150, | 2. | माघ्याः | माघ्यां |
| | 5. | स्वाहा | This is omitted. |
| | 6. | महा...इति चतसृभिः | महाव्याहृतयश्चतस्रः |
| 151, | 4. | परितस्थुषीः | परिसस्रुषीः |
| | 5. | अन्यतः...स्वाहा | अम्यमन्तर्दधे पितृभ्योऽमुष्मै स्वाहा |
| | 8. | करणस्य | विकरणस्य Same as in A². |
| 152, | 3. | समानं | समाशन |

